॥श्रीः॥

अथ

श्रीवराहमिहराचार्यकृतम् ।

# लघुजातकम्

श्रीभट्टोत्पलकृतहिताख्यया व्याख्यया

तथा

पं०नारायणप्रसादकृतभाषाव्याख्यया

च समलंकृतम्

तदेव

भगीरथात्मजेन

## हरिप्रसाद शर्मणा

मुम्बापूर्याम्

गणपतकृष्णाख्ययंत्रे मुद्रापितम्

संवदब्दाः १९५५ शकाब्दाः १८२०

# प्रस्तावना.

यथा शिखा मयूराणां नागानां मणयो यथा ॥
तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम् ॥ १ ॥

तथाच—वेदस्य चक्षुः किल शास्त्रमेतत्प्रधानताङ्गेषु
ततोऽर्थजाता ॥ अंगैर्युतोऽन्यैः परिपूर्णमूर्ति-
श्चक्षुर्विहीनः पुरुषो न किंचित् ॥ २ ॥

जैसे मयूरों ( मोरों ) के शिखा और जैसे सर्पोंके मणि समस्त अंगोंमें प्रधान और शोभाको प्राप्त है तैसेही वेदांग शास्त्रोंमें ज्योतिषशास्त्र जैसे मनुष्यके सम्पूर्ण अंगोंमें शिर प्रधान है तद्वत् शिरके समान स्थित है, और वेदांगोंमें यह शास्त्र श्रेष्ठताके कारण अर्थसाधक है. अन्य सम्पूर्ण अंगोंसे युक्त पूर्ण मूर्तिवाला मनुष्य नेत्रोंके विना कुछ भी शोभाको प्राप्त नहीं होता, इसकारण ज्योतिष शास्त्र सम्पूर्ण शास्त्रोंमें मुख्य है. कि जिसके द्वारा भूत भविष्य वर्तमानकी सम्पूर्ण बातोंको विना देखेही मनुष्य बतलासक्ता है. यह ज्योतिष शास्त्ररूपी नेत्र प्रत्यक्ष नेत्रोंसे अधिकतर श्रेष्ठ हैं किंतु यह नेत्र नाशवान् नहीं है प्रत्यक्ष नेत्र नाश होजायं परंतु यह ज्योतिष शास्त्ररूप हृदयके नेत्र नाश नहीं होते; अतः ज्योतिष शास्त्रके अध्ययन किये विना पंडित नेत्रहीन जानना. तिस ज्योतिष शास्त्रके अनेक विषय हैं जैसे, मुहूर्त, स्वर, जातक, ताजक, प्रश्न, शकुन, अदि तथा ज्योतिःशास्त्ररूप वृक्षके स्कंध तीन हैं, सिद्धान्त, संहिता, होरा होराके प्रगट करनेवालोंमेंसे आधुनिक समयमें श्रीवराहमिहराचार्यजी अत्यन्त प्रसिद्ध आचार्य हुये हैं कि जिनके ( बृहज्जातक ) एक छोटे ग्रन्थमें जन्मपत्रफल तथा प्रश्न कहनेका विचार अत्यन्त चमत्कारिक है. कि जो अच्छे प्रकार उसके द्वारा विचार करै तो

वचन मिथ्या कदापि होनेका नहीं. उसी बृहज्जातकके अनुकूल श्रीवराहमिहराचार्यजीने (लघुजातक) नामका ग्रन्थ निर्माण किया है तिसको हमने पण्डित नारायणप्रसाद मुकुंदरामजीविरचित भाषाटीका तथा उत्पलभट्टकृतसंस्कृतटीकासे संयोजित करके सुमेरपुरनिवासी शास्त्री रघुवंशशर्माद्वारा सम्यक्तया शुद्ध कराय उत्तमतापूर्वक छापके प्रसिद्ध किया है. इसको पढ़कर हमारे अपार परिश्रमको सफल कीजिये यही हमारी समस्त सज्जनोंसे प्रार्थना है.

हरिप्रसाद भगीरथजी,

कालकादेवीरोड, रामवाड़ी मुंबई.

॥ श्रीः ॥

अथ

# लघुजातकम् ।

टीकाद्वयसमलंकृतम् ।

भाषाकारकृतमङ्गलाचरणम् ॥ नत्वा ब्रह्म सनातनं सुविमलं धाम श्रुतीनां परं यस्यानुस्मरणाच्चतुर्मुखमुखास्सृष्टेर्विताने क्षमाः ॥ ज्योतिश्शास्त्रविचारणे शुभमतिः श्रीमिश्रनारायणः कुर्वेऽहं लघुजातकस्य विवृतिं भाषावचोभिर्मुदे ॥ १ ॥

॥ ग्रंथकारकृतं मङ्गलाचरणम् ॥

यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोऽपि ॥ कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥ १ ॥

अन्वयः—सः धाम्नां निधिः सूर्यः ( आदित्यः ) जयति ( सर्वोत्कर्षेण वर्तते ) कथं भूतः सूर्यः यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलः त्रिनेत्रः ( महादेवः ) अपि अञ्जलिं कुरुते ( नमस्कारं करोतीत्यर्थः ) ॥ १ ॥

सं०टी०–श्रीगणेशायनमः॥ प्रणिपत्य महादेवं भुवनगुरुं च लोकेशम्| भट्टोत्पलो लघुतरां जातकटीकां करोति शिष्यहिताम्॥१॥ सतामयमाचारो यच्छास्त्रप्रारम्भेऽभिमतदेवतानमस्कारं कुर्वन्ति | तदयमामन्तिकाचार्यवराहमिहिरोऽर्कलब्धवरप्रसादो ज्योतिःशास्त्रसंग्रहं कृत्वा तदे-

व भीरूणां कृते सङ्क्षिप्तगणितसङ्ग्रहं कृत्वा होराशास्त्रं सङ्क्षिप्तं वक्ष्यमाणः अशेषविघ्नोपशमायाभिमतसूर्यस्यादौ प्रणाममाह । स सूर्य आदित्यो जयति सर्वोत्कर्षेण वर्तते। कथंभूतः धाम्नां निधिः। यस्योदय-कालेऽस्तकाले च त्रिनेत्रो महेशः अञ्जलिं कुरुते नमस्कारं करोती-त्यर्थः । कीदृशः सुरमुकुटनिघृष्टचरणकमलः देवचूडामणिरत्ननि-घृष्टपादपद्म इत्यर्थः । यतः सर्वे देवा भगवतो नारायणस्य महादेवस्य पादवन्दनं कुर्वन्ति अपि शब्दाद्यस्य महादेवोऽपि अञ्जलिं करोति तस्य सेंद्राः सुराः महर्षयश्च वन्दनं कुर्वन्ति ॥ १ ॥

भाषार्थः—वह तेजके स्थान जो सूर्य हैं सो सबसे उत्कर्ष ( श्रेष्ठपन ) करके वर्तमान हैं. कि जिनके उदय और अस्तके समयमें देवताओंके मुकुटसे घिसाजाता है. चरणकमल जिन महादेवजीका सोभी जिन सूर्य नारायणको अंजलिदान अर्थात् प्रणाम करते हैं. ॥ १ ॥

### ग्रन्थप्रयोजनम् ।

**होराशास्त्रं वृत्तैर्मया निबद्धं निरीक्ष्य शास्त्राणि ॥**
**यत्तस्याप्यार्याभिः सारमहं सम्प्रवक्ष्यामि ॥ २ ॥**

सं०टी०--होराशास्त्रं वक्ष्यामीत्याह । होराशास्त्रं जातकं मया वृ-त्तैर्नानाविधैर्निबद्धं रचितम् । किं कृत्वा शास्त्राण्यन्यानि निरीक्ष्य वि-लोक्य यत्तस्य सारमार्याभिः सम्प्रवक्ष्यामि कथयिष्यामीत्यर्थः ॥ २ ॥

भाषार्थः—इस ग्रंथके बनानेवाले श्रीवराहमिहराचार्यजी कहतेहैं कि हमने अनेक शास्त्रोंको देखकर छंदोंकरके होरा शास्त्रको बनाया है तिस-का जो सार है उसको भी आर्याछन्द करके सम्यक्प्रकारसे वर्णन करतेहैं २

**यदुपचितमन्यजन्मनि शुभाऽशुभं तस्य क-र्मणः प्राप्तिम् ॥ व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥ ३ ॥**

सं०टी०-शास्त्रोपयोगित्वमाह । प्राणिनां यदन्यजन्मनि शुभमशुभं वा कर्मार्जितं सञ्चितं तस्य कर्मणः प्राप्तिमेतच्छास्त्रं व्यञ्जयति प्रकटीकरोतीत्यर्थः। यस्मिन् काले शुभफलं यस्मिंश्चाऽशुभफलमिति । क इव दीप इव । यथा दीपस्तमसि अन्धकारे द्रव्याणि विद्यमानानि व्यञ्जयति व्यवहारार्थम् ॥ ३ ॥

भाषार्थः—जो अन्य जन्ममें शुभाशुभ कर्म किये हैं उन कर्मोंकी प्राप्तिको यह शास्त्र जनाताहै कि इस वर्षमें ऐसा होगा. जैसे अंधकारमें सब वस्तुवोंको दीपक दिखलाताहै. ॥ ३ ॥

कालपुरुषाङ्गविभागः ।

**कालनरस्यावयवान् पुरुषाणां चिन्तयेत्प्रसवकाले ॥ सदसद्ग्रहसंयोगात् पुष्टाः सोपद्रवास्ते च ॥ ४ ॥ शीर्ष १ मुख २ बाहु ३ हृदयो ४ दराणि ५ कटि ६ बस्ति ७ गुह्यसंज्ञानि ८ ॥ ऊरू ९ जानू १० जङ्घे ११ चरणा १२ विति राशयोऽजाद्याः ॥ ५ ॥**

सं०टी०—कालपुरुषस्य मेषादिराशिपूर्वकमङ्गविभागमाह। अजाद्या राशयः कालस्याङ्गानि । राशय इति फलितोऽर्थः। अस्य कालपुरुषस्य मेषः शिरः वृषो मुखं मिथुनं बाहू कर्कटो हृदयं सिंह उदरं कन्या कटिः तुला बस्तिः नाभिरधोभागः वृश्चिको गुह्यं धनुरूरुयुग्मं मकरो जानुयुगुलं कुम्भो जङ्घे मीनः चरणौ। प्रयोजनं जन्मकाले। मेषादिराशिषु शुभग्रहाक्रान्तेषु मनुष्याणां शीर्षादिकानामारोग्यता पापाक्रान्तेषु रोगित्वं सङ्ग्रामादिप्रविष्टस्य व्रणादिज्ञानम् ॥ ४ ॥ ५ ॥

भाषार्थः—कालपुरुषके अंगप्रत्यंगोंको जीवोंके जन्मसमयमें सत् और असत् ग्रहके संयोगसे पुष्ट अपुष्टका चिन्तन करै ॥ ४ ॥ कालपुरुषका अंगविभाग मेषादि राशियों-करके कहतेहैं—कालपुरुषका मेष शिर, वृषभ मुख, मिथुन बाहु, कर्क हृदय सिंह उदर, कन्या कटि, तुला बस्ति, ( नाभि और गुदाका मध्यभाग ), वृश्चिक गुदा, धनु ऊरूभाग, मकर जानु कुंभ जंघा, मीन चरण हैं; इन




राशियोंमे जो ग्रह शुभ वा पाप होवें उनका शुभाशुभ फल कहना और रोगमें अंगपीडा तथा संग्रामादिमें घाव आदिका विचार करना ॥ ५ ॥

## राशिवर्णज्ञानम् ।

**अरुणसितहरितपाटलपाण्डुविचित्राः सितेतरपिशङ्गौ ॥ पिङ्गलकर्बुरबभ्रुकमलिना रुचयो यथासङ्ख्यम् ॥ ६ ॥**

सं०टी०—व्याधितस्य पीडाज्ञानाय तिलकादिचिह्नज्ञानाय च राशिवर्णज्ञानमाह । अजाद्या इत्यनुवर्तते। अजादयो राशयो वर्णयुता भवन्ति। तत्र मेषोऽरुण ईषद्रक्तः वृषः श्वेतः मिथुनं हरितः शुकाभः कर्कटः पाटलः ईषत् श्वेतरक्तः सिंहः पाण्डुः धूम्राभः ईषत् शुक्लः कन्याराशिर्विचित्रो नानावर्णः तुला सितेतरः कृष्णः वृश्चिकः पिशङ्गः सुवर्णवर्णः धन्वी पिङ्गलः ईषत्कपिलः मकरः कर्बुरः शुक्लकपिलमिश्रवर्णः कुम्भो बभ्रुः कपिलः मीनो मलिनो मत्स्यवर्णः। एताः राशीनां रुचयः वर्णाः। प्रयोजनं हृतनष्टादिषु द्रव्यवर्णज्ञानम् ॥ ६ ॥

भाषार्थः—मेषादिराशियोंका वर्ण कहतेहैं— मेषका रक्त वर्ण, वृषका श्वेत वर्ण, मिथुनका हरित, कर्कका पाटल ( श्वेतरक्त), सिंहका पांडु (धूम्र वर्ण ), कन्याका विचित्र वर्ण (अनेकरंग), तुलाका कृष्ण वर्ण, वृश्चिकका सुवर्णसमान वर्ण, धनुका पीत वर्ण, मकर कर्बुर ( श्वेतरक्त वा श्वेतश्याम मिश्रितवर्ण ), कुंभ नकुलवर्ण, मीन मलीन ( मत्स्य ) वर्ण, जानना. इसका प्रयोजन यह है कि नष्टवस्तुका स्वरूप जानना. तथा जंतुका वर्ण जानना ॥ ६ ॥

## राशिसंज्ञादिग्विभागः ।

**पुंस्त्री क्रूराऽक्रूरौ चरस्थिरद्विस्वभावसंज्ञाश्च ॥ अजवृषमिथुनकुलीरा पञ्चमनवमैः सहेन्द्राद्याः ७**

सं०टी०—राशिसंज्ञादि दिग्विभागं चाह । पुंस्त्रीति-मेषः पुमान्वृषः स्त्री मिथुनं पुमान् कर्कटः स्त्री एवं सर्वत्र । तथा क्रूराऽक्रूरौ । मेषः क्रूरः वृषोऽक्रूरः सौम्यः एवं सर्वत्र । चरस्थिरद्विस्वभावसंज्ञाश्चेति । ततो मेषश्चरः वृषः स्थिरः मिथुनं द्विःस्वभावः एवं सर्वत्र। कर्कटादिषु प्रयोजनं पुरुषशीलज्ञानादि । अजवृषमिथुनकुलीरा इति । अजो मेषस्तस्य पञ्चमनवमाभ्यां सह पूर्वा दिग्वृषस्य स्वपञ्चमनवमाभ्यां सह दक्षिणा दिक् । मिथुनस्य स्वपञ्चमनवमाभ्यां सह पश्चिमा दिक् ।

वृषकुलीरः कर्कटस्तस्य पञ्चमनवमाभ्यां सहोत्तरा दिक् । प्रयोजनं तु क्रूरादेर्दिग्गमनादिज्ञानम् ॥ ७ ॥

भाषार्थः— पुरुष, स्त्री, क्रूर, सौम्य, और चर, स्थिर, द्विस्वभाव यह मेषादिराशियोंकी संज्ञा जाननी. और मे० वृ० मि० क० यह राशि अपनेसे पंचमनवमराशिसहित पूर्वआदिदिशाओंमें निवास करे हैं सो चक्रसे जानना ॥ ७॥

राशियोंका वर्ण संज्ञा तथा दिशावासका चक्र ।

| राशि | वर्ण | पुरुष स्त्री | क्रूरसौम्य | चरादिसंज्ञा | दिशावास |
|---|---|---|---|---|---|
| मे | रक्त | पुरुष | क्रूर | चर | पूर्व |
| वृ | श्वेत | स्त्री | सौम्य | स्थिर | दक्षिण |
| मि | हरित | पुरुष | क्रूर | द्विःस्व | पश्चिम |
| क | श्वे,रक्त | स्त्री | सौम्य | चर | उत्तर |
| सिं | धूम्र | पुरुष | क्रूर | स्थिर | पूर्व |
| क | विचित्र | स्त्री | सौम्य | द्विःस्व | दक्षिण |
| तु | कृष्ण | पुरुष | क्रूर | चर | पश्चिम |
| वृ | स्वर्णव, | स्त्री | सौम्य | स्थिर | उत्तर |
| ध | पीत | पुरुष | क्रूर | द्विःस्व | पूर्व |
| म | कर्बुर | स्त्री | सौम्य | चर | दक्षिण |
| कुं | नकुल | पुरुष | क्रूर | स्थिर | पश्चिम |
| मी | मलिन | स्त्री | सौम्य | द्विःस्व | उत्तर |

## राश्यंशाधिपाः ।

**कुजशुक्रज्ञेन्द्वर्कज्ञशुक्रकुजजीवसौरियमगुरवः॥ मेशा नवांशकानामजमकरतुलाकुलीराद्याः ॥ ८॥**

सं०टी०—राश्यंशाऽधिपानाह । कुजादयो मेषादीनामधिपाः। तत्र मेषस्य भौमोऽधिपतिःवृषस्य शुक्रः मिथुनस्य बुधः कर्कस्य चन्द्रः सिंहस्यादित्यः कन्यायां बुधः तुलायाः शुक्रः वृश्चिकस्य भौमः धन्विनो जीवः मकरस्य मन्दः कुम्भस्य शनिः मीनस्य बृहस्पतिः । तथा नवांशकानामजमकरतुलाकुलीराद्या इति । येषां नवांशकानां ते अजमकरतुलाकुलीराद्याः मेषस्य मेषाद्या नवांशा धन्व्यन्ताः वृषस्य मकराद्याः कन्यान्ताः मिथुनस्य तुलाद्या मिथुनान्ताः कर्कटस्य कर्कटाद्या मीनान्ताः

मेषवत् सिंहधन्विनोः वृषवत् कन्यामकरयोः मिथुनवत्तुलाकुम्भयोः कर्कटवद्वृश्चिकमीनयोः नवांशकानां राश्यधिपा एव अधिपतयो ज्ञेयाः ८

भाषार्थः—मेषादिराशियोंके स्वामी कहते हैं. मेषका स्वामी कुज ( मंगल ), वृषका शुक्र, मिथुनका बुध, कर्कका इंदु ( चंद्रमा ), सिंहका सूर्य, कन्याका बुध, तुलाका शुक्र,वृश्चिकका मंगल,धनुका बृहस्पति, मकरका शनैश्चर, कुंभका शनि, मीनका बृहस्पति स्वामी है, और मेष मकर तुला कर्क इन चार राशियोंकरके नवांशाकी गणना होती है सो चक्रमें स्पष्ट देखना ॥ ८ ॥

नवांशचक्रम् ।

| अंश | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३।२० | मे | म | तु | क | मे | म | तु | क | मे | म | तु | क |
| ६।४० | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं |
| १०।० | मि | मी | ध | क | मि | मी | ध | क | मि | मी | ध | क |
| १३।२० | क | मे | म | तु | क | मे | म | तु | क | मे | म | तु |
| १६।४० | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ |
| २०।०० | क | मि | मी | ध | क | मि | मी | ध | क | मि | मी | ध |
| २३।२० | तु | क | मे | म | तु | क | मे | म | तु | क | मे | म |
| २६।४० | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं | वृ | सिं | वृ | कुं |
| ३०।०० | ध | क | मि | मी | ध | क | मि | मी | ध | क | मि | मी |

होराद्रेष्काणद्वादशांशाधिपाः ।

**स्वगृहाद्द्वादशभागाः द्रेष्काणाः प्रथमपञ्चनवपानाम् । होरे विषमेऽर्केन्द्वोः समराशौ चन्द्रतीक्ष्णांशोः ॥ ९ ॥**

सं०टी०—द्वादशभागे द्रेष्काणहोराधिपतिज्ञानमाह। स्वगृहात् आरभ्य द्वादशभागाः २।३० गणनीयाः । मेषस्य मेषाद्या मीनान्ताः वृषस्य

नवभाद्या मेषान्ताः एवं सर्वत्र। द्वादशांशकानां राश्याधिपा एवाऽधिप-
र्द्वे। द्रेष्काणाः प्रथमपञ्चनवपानामिति। द्रेष्काणो राशित्रिभागः एवं
क्रमं प्रथमपञ्चनवपानां सम्बन्धिनो भवन्ति। तथा मेषस्य
प्रथमोऽङ्गारकः तस्य सम्बन्धी द्वितीयः पञ्चमस्याधिपस्यार्कस्य सम्बन्धी
तृतीयो नवमाधिपस्य जीवस्य सम्बन्धी एवं वृषादीनामपि। होरे विषमे
इति। होरा राश्यर्धं १५ तत्र विषमराशीनां मेषमिथुनसिंहादीनां प्रथम-
होरादित्यस्य द्वितीयहोरा चन्द्रमसः समराशीनां वृषकर्कटकन्यादीनां
प्रथमा चन्द्रमसः द्वितीयार्कस्य ॥ ९ ॥

क

द्वादशांशचक्रम् ।

| अंश. | म | वृ | मि | क | सि | क | तु | वृ | ध | म | कु | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २।३० | मे | वृ | मि | क | सि | क | तु | वृ | ध | म | कु | मी |
| ५।० | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु | मी | मे |
| ७।३० | मि | क | सि | क | तु | वृ | ध | म | कु | मी | मे | वृ |
| १०।० | क | सिं | क | तु | वृ | ध | म | कु | मी | मे | वृ | मि |
| १२।३० | सिं | क | तु | वृ | ध | म | कु | मी | मे | वृ | मि | क |
| १५।० | क | तु | वृ | ध | म | कु | मी | मे | वृ | मि | क | सि |
| १७।३० | तु | वृ | ध | म | कु | मी | मे | वृ | मि | क | सिं | क |
| २०।० | वृ | ध | म | कु | मी | मे | वृ | मि | क | सि | क | तु |
| २२।३० | ध | म | कु | मी | मे | वृ | मि | क | सि | क | तु | वृ |
| २५।० | म | कु | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध |
| २७।३० | कु | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म |
| ३०।० | मी | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु |

भावार्थः— अब द्वादशांश और द्रेष्काण तथा होराको कहते हैं--अ-
नि २ गृहसे बारहवां भाग अर्थात् अंश २ कला ३० का १ द्वादशांश क-
ना. जैसे मेषराशिमें प्रथम मेषका फिर वृषका फिर मिथुनका इत्यादि
तिसे द्वादशांश जानना. अब द्रेष्काण कहते हैं. राशिके ३० अंशमें
तीन हिस्सा करने उसमें प्रथम द्रेष्काण १० अंशतक, द्वितीय द्रेष्काण
२० अंशतक, तृतीय द्रेष्काण ३० अंशतक जानना. तहां प्रथम
द्रेष्काण अपनीही राशिके स्वामीका; द्वितीय द्रेष्काण पांचवीं राशिके

| द्रेष्काणचक्रम् । | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु | मी | रा. अं |
| मं | शु | बु | चं | सू | बु | शु | मं | बृ | श | श | बृ | १० |
| सू | बु | शु | मं | बृ | श | श | बृ | मं | शु | बु | च | २० |
| बृ | श | श | बृ | मं | शु | बु | च | सू | बु | शु | मं | ३० |

स्वामीका जानना और तृतीय द्रेष्काण नवीं राशिके स्वामीका जानना जैसे मेषमें प्रथम मंगलका द्रेष्काण १० अंशतक, द्वितीय सूर्यका द्रेष्काण २० अंशतक, तृतीय बृहस्पतिका द्रेष्काण ३० अंशतक जानना. ऐसेही चक्रसे वृषादिका जाननां. अब होरा कहते हैं- तहां राशिके तीस ३० अंशमें दो होरा अर्थात् १५ अंशका पहला होरा फिर ३० अंशतक दूसरा होरा होता है. विषम राशि अर्थात् मे. मि. सिं. तु. ध. कुं. इन राशियोंमें प्रथम १५ अंशतक सूर्यका होरा फिर ३० अंशतक चंद्रमाका होरा और समराशि अर्थात् वृ. क. क. वृ. म. मी. इनराशियोंमें प्रथम १५ अंशतक चंद्रमाका होरा, उपरांत ३० अंशतक सूर्यका होरा जानना. स्पष्ट चक्रमें स्पष्ट देखना ॥ ९ ॥

| होराचक्रम् । | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी | लग्न |
| सू | चं | सू | चं | सू | चं | सू | चं | सू | चं | सू | चं | १५अंश |
| चं | सू | चं | सू | चं | सू | चं | सू | चं | सू | चं | सू | ३०अंश |

## कुजयमजीवज्ञसिताः पञ्चे५न्द्रियवसु८मुनी७न्द्रियांशानाम् ॥ विषमेषु समर्क्षेषूत्क्रमेण त्रिंशांशकाः कल्प्याः ॥ १० ॥

सं० टी०–त्रिंशांशाधिपानाह । यथाक्रमेण कुजादीनां पञ्चादयो भागाः यथाक्रमेण त्रिंशांशकाः कल्प्याः । तत्रादावेवाङ्गारकस्य पञ्च ततः परं मन्दस्य पञ्च ततो जीवस्याष्टौ ततः परं बुधस्य सप्त ततः शुक्रस्य पञ्च । एवं विषमराशिषु समराशिषूत्क्रमेण यथा प्रथमाः पञ्च शुक्रस्य५ ततः सप्त बुधस्य ततोऽष्टौ जीवस्य ततः पञ्च सौरस्य ततः पञ्च भौमस्य ॥ १० ॥

भावार्थः— अब त्रिंशांशपति कहते हैं— तहां विषमराशिमें राशिके ३० अंशमेंसे प्रथम ५ अंशतक मंगलका त्रिंशांश, आगे ५ अंश शनिका,उपरांत८ अंश बृहस्पतिका, फिर ७ अंश बुधका,अनंतर ५ अंशतक शुक्रका त्रिंशांश जानना. और समराशिमें प्रथम ५ अंशतक शुक्रका त्रिंशांश, अनंतर ७ अंशतक बुधका, फिर ८ अंशतक गुरुका त्रिंशांश, आगे ५ अंश शनिका, फिर५ अंश मंगलका, त्रिंशांश जानना. सो चक्रमें देखना ॥ १० ॥

| विषमत्रिंशांशचक्र । | | | | | | | समत्रिंशांशचक्र । | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अं | मे | मि | सिं | तु | ध | कु | वृ | क | क | वृ | म | मी | अं. |
| ५ | म | म | म | म | म | म | शु | शु | शु | शु | शु | शु | ५ |
| ५ | श | श | श | श | श | श | बु | बु | बु | बु | बु | बु | ७ |
| ८ | बृ | बृ | बृ | बृ | बृ | बृ | बृ | बृ | बृ | बृ | बृ | बृ | ८ |
| ७ | बु | बु | बु | बु | बु | बु | श | श | श | श | श | श | ५ |
| ५ | शु | शु | शु | शु | शु | शु | म | म | म | म | म | म | ५ |

द्विपदादिसंज्ञा ।

नृचतुष्पदकीटाख्या बलिनः प्राग्दक्षिणापरोत्तरगाः॥ सन्ध्याद्युरात्रिबलिनः कीटा नृचतुष्पदाश्चैवम् ॥ ११ ॥ मेषवृषधन्विसिंहाश्चतुष्पदा मकरपूर्वभागश्च ॥ कीटः कर्कटराशिः सरीसृपो वृश्चिकः कथितः ॥१२॥ मकरस्य पश्चिमार्द्धे ज्ञेयो मीनश्च जलचरः स्यातः । मिथुनतुलाघटकन्या द्विपदाख्या धन्विपूर्वभागश्च ॥ १३ ॥

सं०टी०-राशीनां दिक्कालबलमाह । नृराशयो मिथुनकन्यातुलाकुम्भधन्विपूर्वार्धं एते पूर्वस्था बलिनः । लग्नगता इत्यर्थः। चतुष्पदा मेषवृषसिंह धन्विपरार्धं मकरपूर्वार्द्धं एते दक्षिणस्था बलिनो दशमस्थान-

गता इत्यर्थः। कीटो वृश्चिकः स पश्चिमस्थो बली सप्तमस्थ इत्यर्थः। कर्कटमकरपरार्धमीना आप्याः एते चोत्तरस्था बलिनश्चतुर्थस्थानगता इत्यर्थः। सन्ध्याद्युरात्रिबलिन इति। अत्र जलराशयोऽपि कीटग्रहणेन गृह्यन्ते एवं कीटः सन्ध्याकाले बली नरराशयो दिवाकाले बलिनः चतुष्पदा रात्रौ बलिनः ॥ ११ ॥ १२ ॥ १३ ॥

भाषार्थः—अब राशियोंका कालबल और दिग्बल कहतेहैं.-नरराशि जो मिथुन, कन्या, तुला, कुंभ, धनका पूर्वार्द्ध यह प्राक् ( पूर्व ) दिशामें अर्थात् लग्नमें बली जानना, और चतुष्पद राशि जो मेष, वृष, सिंह मकरका पूर्वार्ध, धनका परार्ध, यह राशि दक्षिणदिशामें अर्थात् दशम स्थानमें बली जानना. और वृश्चिक, धनका पूर्वार्ध यह पश्चिममें अर्थात् सप्तमस्थानमें बली जानना, जलचरराशि जो मकरका परार्ध, मीन और कर्क यह उत्तरमें अर्थात् चतुर्थस्थानमें बली जानना, और वृश्चिक मीन, कर्क, मकरका परार्ध यह संध्यासमय बली हैं, मि०कुं०तु०कं०धन पूर्वार्ध यह दिनमें बलीहैं. और मे०वृष०सिं०मकरका पूर्वार्ध धनका परार्ध यह रात्रिमें बलीहैं. मेष, वृष, सिंह, धनु, और मकरका पूर्वभाग,यह चतुष्पदराशि हैं, और मकरपरार्ध, कुंभ, मीन, यह जलचरराशि प्रसिद्ध मिथुन, तुला, कन्या, और धनका पूर्वार्ध यह राशि द्विपद हैं. कर्कराशि कीट संज्ञक है. और वृश्चिककी सर्पसंज्ञा है. ॥ ११ ॥ १२ ॥ १३ ॥

## राशिबलज्ञानम्।

**अधिपयुतो दृष्टो वा बुधजीवनिरीक्षितश्च यो-**
**राशिः॥ स भवति बलवान्न यदा युक्तो दृष्टो-**
**ऽपि वा शेषैः ॥ १४ ॥**

सं०टी०-अथ राशिबलज्ञानार्थमाह। स्वामिना युतो दृष्टो वा बलवानेव। बुधजीवयोरन्यतमेन युक्तो दृष्टो वा बलवानेव। यदाऽन्यैर्ग्रहैर्युतो नाऽपि वीक्षितः। अनुक्तदृष्टो युक्तो वा स्वस्वामिना युक्तो राशिबलवान् भवति। स्वामिना दृष्टः अन्यैः उक्तानुक्तैर्दृष्टो राशिर्मध्यबलो भवति। स्वस्वामिना बुधजीववर्ज्यमन्यैर्युतदृष्टो बलहीन एव॥ १४॥

भाषार्थः—अब राशियोंका बल कहतेहैं— मेषादिराशि जो अपने स्वामीसे युक्त दृष्ट हो अथवा बुध बृहस्पतिसे दृष्ट जो राशि हो सो बल-

नु होतीहै. परंतु अन्य ग्रह उसमें न हों और देखतेभी नहीं हों तो वह राशि बली होती है. और इससे अन्यथा अर्थात् जिस राशिका स्वामी उसमें युक्त अथवा दृष्ट न हो, अथवा बुध और बृहस्पतिसे युक्त दृष्ट नहीं हो वह राशि निर्बल जानना ॥ १४ ॥

### तन्वादिभावसंज्ञा ।

**तनु१धन२सहज३सुहृत्४सुत५रिपु६जाया७**
**मृत्यु८धर्म९कर्मा१०याः११॥ व्यय१२इति**
**लग्नाद्भावाश्चतुरस्राख्येऽष्टमचतुर्थे ॥१५॥**

सं०टी०–लग्नादीनां तन्वादिभावाश्रयत्वं व्यवहारार्थमाह । लग्नादारभ्यामी तन्वादयो भावाः । तत्र लग्नं प्रथमं पुरुषस्य शरीरं द्वितीयं धनस्थानं तृतीयं सहजं चतुर्थं सुहृत् भ्रातृमित्रसंज्ञं वा पञ्चमं सुतः षष्ठं शत्रुः सप्तमं जाया भार्या अष्टमं मृत्युः नवमं धर्मः दशमं कर्म एकादशं आयः द्वादशं व्ययः । लग्नादीनां यथोक्तभावानां शुभपापग्रहसंयोगात्सम्पत्तिविपत्ती चिन्तनीये इति । चतुरस्राख्येऽष्टमचतुर्थे लग्नादष्टमस्थानस्य चतुर्थस्थानस्य चतुरस्रेत्याख्या ॥ १५ ॥

तन्वादिसंज्ञाचक्रम् ।

१ तनु
२ धन
३ सहज
४ सुहृत्
५ सुत
६ रिपु
७ जाया
८ मृत्यु
९ धर्म
१० कर्म
११ आय
व्यय १२

भाषार्थः— अब तन्वादिभावसंज्ञा कहतेहैं– लग्नको आदि देके तन्वादिसंज्ञा जानना. जैसे लग्नकी तनु संज्ञा, दूसरे स्थानकी धनसंज्ञा, तीसरे स्थानको सहजसंज्ञा, इत्यादि चक्रसे जानना. और चौथे तथा आठवें स्थानकी चतुरस्र संज्ञा जानना ॥ १५ ॥

**पातालहिबुकवेश्मसुखबन्धुसंज्ञाश्चतुर्थभावस्य ॥**
**नवपञ्चमे त्रिकोणे नवमर्क्षं त्रित्रिकोणं च ॥१६॥**

सं०टी०–चतुर्थनवमपञ्चमानां संज्ञान्तरमाह । लग्नाच्चतुर्थभवनस्य पातालसंज्ञा सुखसंज्ञा वेश्मसंज्ञा हिबुकसंज्ञा बन्धुसंज्ञा च । तथा च नवमस्य पञ्चमस्य च त्रिकोण इत्याख्या। नवमस्य त्रित्रिकोणमित्यपि च ॥ १६ ॥

भाषार्थः— चतुर्थस्थानकी पाताल, हिबुक, वेश्म, सुख, बंधु संज्ञा स्थ... जाननी. और नवम पंचमस्थानकी त्रिकोण संज्ञा है. नवमस्थानकी त्रि... त्रिकोण संज्ञा है ॥ १६ ॥

**धीः पञ्चमं तृतीयं दुश्चिक्यं सप्तमं तु यामित्रम् ॥ द्यूनं द्युनं च तद्वच्छिद्रमष्टमं द्वादशं रिःफम् ॥ १७ ॥**

सं०टी०–पञ्चमतृतीयसप्तमाष्टमद्वाशस्थानानां संज्ञान्तरमाह लग्नात्पञ्चमस्थानं धीसंज्ञं तृतीयं दुश्चिक्यसंज्ञं सप्तमं यामित्रसंज्ञं द्यूनं द्युनं च तत्तदेव सप्तमस्थानं सप्तमं यामित्रसंज्ञं द्यूनसंज्ञं द्युनं संज्ञं च अष्टमस्थानं छिद्रसंज्ञं छिद्रं क्षतपर्यायं। लग्नाद्वादशं रिःफसंज्ञम् ॥१७॥

भाषार्थः—लग्नसे पांचवें घरकी धी संज्ञा, तीसरे स्थानकी दुश्चिक्य संज्ञा, सातवें स्थानकी यामित्र और द्यून तथा द्युन संज्ञा है, तैसेही अष्टमस्थानकी छिद्रसंज्ञा, और बारहवें घरकी रिःफ संज्ञा है. ॥ १७ ॥

## केन्द्रादिसंज्ञाः।

**केन्द्रचतुष्टयकण्टकलग्नाऽस्तदशमचतुर्थानाम् १।७।१०।४ ॥ संज्ञा परतः पणफरमापोक्लीमं च तत्परतः ॥ १८ ॥**

सं०टी०–स्थानानां संज्ञान्तरमाह । लग्नचतुर्थसप्तमदशमानां चतुर्णां स्थानानां प्रत्येकस्य संज्ञात्रयं केन्द्रचतुष्टयकण्टकमिति। तस्मात्सर्वस्मात्केन्द्रात्परस्य पणफरमित्याख्या । सर्वस्मात्पणफरात्परस्यापोक्लीमेत्याख्या ॥१८॥




भाषार्थः— अब केन्द्रादिसंज्ञा कहतेहैं:— लग्न, चतुर्थ, सप्तम, दशम इन चार घरोंकी केन्द्र, चतुष्टय, कंटक संज्ञा है और केन्द्रघरोंसे परतः ( आगे )

स्थानोंकी पणफर संज्ञा है, और पणफरसे आगेके घरोंकी आपोक्लिम संज्ञा है. सो चक्रसे स्पष्ट जानना ॥ १८ ॥

### उपचयवर्गोत्तमलक्षणम् ।

**त्रिषडेकादशदशमान्युपचयभावा ३।६।११। १०न्यतोऽन्यथाऽन्यानि॥ वर्गोत्तमा नवांशाश्चरादिषु प्रथममध्यान्त्याः ॥ १९ ॥**

सं०टी०–उपचयापचयसंज्ञां नवांशकानां वर्गोत्तमसंज्ञां चाह । तृतीयषष्ठैकादशदशमानामुपचयमित्याख्या । अतोऽन्यथाऽन्यानि उपचयेभ्यो यान्यवशेषस्थानानि तान्यपचयानि इत्यर्थः । वर्गोत्तमा नवांशाः चरराशिषु प्रथमनवांशस्य वर्गोत्तमः स्थिरराशिषु मध्यमस्य पञ्चमस्य द्विःस्वभावराशेश्चान्त्यस्य नवमस्य । एतदुक्तं भवति सर्वस्यैव राशेः स्वनवांशको वर्गोत्तमाख्य इति ॥ १९ ॥

भाषार्थः—लग्नसे तीसरे छठे ग्यारहवें और दशवें स्थानकी उपचय संज्ञा है. और इन स्थानोंसे अन्य १।२।४।५।७।८।९।१२ स्थानोंकी अपचय संज्ञा जाननी. और चर आदि राशियोंमें प्रथम मध्यम अंतका नवांशा क्रमसे वर्गोत्तम जानना. जैसे चरराशि मे. क. तु. म. इनका प्रथमनवांशा वर्गोत्तम है, और स्थिरराशि वृ. सिं. वृश्चि. कुं. इनका मध्यका पाचवां नवांशा वर्गोत्तम होताहै. और द्विस्वभावराशि मि. कन्या. ध. मी. इनका अंतका अर्थात् नवम नवांशा वर्गोत्तम जानना. और सब राशियोंका अपना नवांशा वर्गोत्तम होताहै ॥ १९ ॥

### राशीनां दिनरात्रिबलशीर्षोदयत्वपृष्ठोदयत्वम् ।

**मेषाद्याश्चत्वारः सधन्विमकराः क्षपाबला ज्ञेयाः॥ पृष्ठोदया विमिथुनाः शिरसान्ये ह्युभयतो मीनः ॥ २० ॥**

सं०टी०–राशीनां दिनरात्रिबलपृष्ठोदयत्वशीर्षोदयत्वमाह । मेषाद्याश्चत्वारो मेषवृषमिथुनकर्कटाः धन्विमकराभ्यां सह एते राशयो रात्रिबलिनः। अन्ये दिनबलाः। अत्र यद्यपि बलग्रहणमस्ति तथापि संज्ञा-

मात्रं वेदितव्यं यथा रात्रिसंज्ञा तथा दिनसंज्ञा इति। यतस्तेषां बलं न्ध्याद्युरात्रिबलिन इति। पृष्ठोदया विमिथुना इति। मेषवृषकर्कटधनिकराः पृष्ठोदयसंज्ञाः। अन्ये मिथुनासिंहकन्यातुलावृश्चिककुम्भाः शीर्षोदयसंज्ञाः। मीनः शीर्षोदयः पृष्ठोदयश्चेति ॥ २० ॥

भाषार्थः— अब राशियोंका दिवारात्रिबल और पृष्ठोदय शीर्षोदय संज्ञा कहतेहैं- मेषादि चार राशि मे. वृ. मि. क. और धन, मकर यह राशियां रात्रिमें बली हैं. और मिथुनको छोड़के यही राशियां पृष्ठोदय संज्ञक हैं. और शेष राशि, मि. सिं. क. तु. वृ. कु. इन ६ राशियोंकी शीर्षोदय संज्ञा है और दिनमें बली हैं. और मीनराशिकी शीर्षोदय पृष्ठोदय दोनों संज्ञा जाननी ॥ २० ॥

उच्चलक्षणम् ।

अज १ वृष २ मृग १० ङ्गना ६ कर्कि ४
मीन १२ वणिजांशकेष्विनाद्युच्चाः ॥ दश
१० शिख्य ३ ष्टाविंशति २८ तिथी १५
न्द्रिय ५ त्रिनव २७ विंशे २० षु ॥ २१ ॥

सं०टी०- अर्कादीनामुच्चराशीनाह । सारावल्यां विंशतिरंशाः सिंहे त्रिकोणमपरे स्वभवनमर्कस्य ॥ उच्चं भागत्रितयं वृषं इन्दोः स्यात्रिकोणमपरे स्युः ॥ द्वादशभागा मेषे त्रिकोणमपरे स्वभं तु भौमस्य उच्चफलं कन्यायां बुधस्य तुङ्गांशकैः सदा चिन्त्यम् ॥ परतस्त्रिकोजातं पञ्चभिरंशैः स्वराशिजं परतः॥ दशभिर्भागैश्चापेत्रिकोणमपरे स्वदेवगुरोः॥ शुक्रस्यांशास्तिथयस्त्रिकोणमपरे स्वभं तुलायां च॥ कुम्भे कोणनिजभे रविजस्य रवेर्यथा सिंहे ॥ तद्यथा-आदित्यस्य मेष उच्चं न्द्रस्य वृष उच्चं भौमस्य मृगो मकरः बुधस्य कन्या गुरोः कर्कः शुक्रमीनः मन्दस्य वणिक् तुला एवं सर्वराशिषूच्चसंज्ञा दशादिषुभागेषु स्थिताः परमोच्चस्था भवति । तद्यथा । मेषस्य दशमांशे व्यवस्थितोऽर्कः परमोच्चस्थो भवति वृषस्य तृतीयभागे चन्द्रः मकरस्याष्टाविंतिभागे भौमः कन्यायाः पञ्चदशे बुधः कर्कटस्य पञ्चमे जीवः मीनसप्तविंशे शुक्रः तुलायां विंशतितमे सौरिः एवंविधाः परमोच्चस्था

ता:) ग्रन्थान्तरे च। रवेर्मेषतुले प्रोक्ते चन्द्रस्य वृषवृश्चिकौ ॥ भौमस्य मृगकर्कौ च कन्यामीनौ बुधस्य च ॥ जीवस्य कर्कमकरौ मीनकन्ये सितस्य च ॥ तुलामेषौ च मन्दस्य उच्चनीचे उदाहृते ॥ २१ ॥

भाषार्थः—अब सूर्यादि ग्रहोंकी उच्चराशि कहतेहैं:- सूर्य मेषका चंद्रमा वृषका मंगल मकरका इत्यादि ग्रहोंकी उच्च राशि चक्रसे जानना. और दश आदि अंशोंसे परमोच्च जानना. जैसे सूर्य मेषके १० अंशमें परमोच्च और चंद्रमा वृषके ३ अंशपर परमोच्च जानना. ऐसेही चक्रसे स्पष्ट देखलेना ॥ २१ ॥

उच्चराशिचक्रम् ।

| सू | च | मं | बु | बृ | शु | श | रा | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| मे | वृ | म | क | क | मी | तु | मि | उच्चराशय |
| १० | ३ | २८ | १५ | ५ | २७ | २० | १५ | अंशाः |

## नीचमूलत्रिकोणम् ।

उच्चान्नीचं सप्तममर्कादीनां त्रिकोणसंज्ञानि ॥ सिंह ५ वृषा २ ज १ प्रमदा ६ कार्मुकभृत् ८ तौलिकुम्भधराः ॥ २२ ॥

सं०टी०--ग्रहाणामुच्चनीचस्थानानि त्रिकोणानि चाह । यस्य ग्रहस्य यदुच्चं तस्मादुच्चस्थानात् सप्तमं नीचसंज्ञं तत्र दशादिष्वेतेषु परमनीचत्वं ज्ञेयं। अत्र न्यासः एवं विधाः सूर्यादयः परमनीचस्थाः भवन्ति। अर्कादीनां त्रिकोणसंज्ञानीति । आदित्यस्य सिंहस्त्रिकोणं चन्द्रमसो वृषः भौमस्य मेषः बुधस्य कन्या जीवस्य धनुः शुक्रस्य तुला मन्दस्य कुम्भ इत्यर्थः ॥ २२ ॥

भाषार्थः— अब नीचराशि और मूलत्रिकोण कहतेहैं:- सूर्यादि ग्रह अपनी उच्चराशिसे सातवीं राशिमें नीच जानने और नीचराशिमें पूर्वोक्त अंशोंपर होयँ तो परमनीच जानने, और सूर्यकी सिंह मूलत्रिकोणराशि है. चंद्रमाकी वृष, मंगलकी मेष, बुधकी

नीच मूलत्रिकोणराशिचक्रम् ।

| सू | च | मं | बु | बृ | शु | श | ग्रहाः |
|---|---|---|---|---|---|---|---|
| तु | वृ | क | मी | म | क | मे | नीचराशि |
| १० | ३ | २८ | १५ | ५ | २७ | २० | अंश— |
| सि | वृ | मे | क | ध | तु | कु | मूलत्रिकोण |

कन्या, बृहस्पतिकी धनु, शुक्रकी तुला, शनिकी कुंभ, मूलत्रि-
णराशि है ॥ २२ ॥

षड्वर्गाः ।

गृह ३० होरा १·५ द्रेष्काणा १० नवभागो ३
२० द्वादशांशक २ । ३० त्रिंशः ॥ वर्गः प्र-
त्येतव्यो ग्रहस्य यो यस्य निर्दिष्टः ॥ २३ ॥

इति श्रीवराहमिहिरकृते लघुजातके रा-
शिप्रभेदोनाम प्रथमोऽध्यायः ॥१॥

सं०टी०– षड्वर्गज्ञानार्थमाह । आत्मीयो राशिर्ग्रहस्य गृहसंज्ञः आत्मीया होरा आत्मीयश्च द्रेष्काणः आत्मीयो नवमभागः आत्मीय द्वादशांशः आत्मीयस्त्रिंशद्भागः एतेषां षड्वर्गसंज्ञा यद्यप्येवं तथाप्यात्मीये स्थितः स्ववर्गस्थो भवति वर्गशब्दस्य समुदायवाचित्वात् यत्र चन्द्रा योः त्रिंशांशभावः भौमादीनां होराभावः एवं सर्वत्र ज्ञातव्यम् ॥२३॥ इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां राशियोनिप्रभेदोनाम प्रथमोऽध्यायः ॥ १ ॥

भाषार्थः— अब षड्वर्गसंज्ञा कहतेहैं:– गृह, होरा, द्रेष्काण, नवांश यह षड्वर्गसंज्ञक हैं. वर्गशब्द समुदायवाचक है. और ग्रहोंकी जो राशियां हैं उनका २ स्वामी जो षड्वर्गमें हो तो वह वर्ग उस गृहका जा नना ॥ २३ ॥

आत्मा रविः शीतकरस्तु चेतः सत्वं धराजः
शशिजोऽथ वाणी ॥ ज्ञानं सुखं चेन्द्रगुरुर्मदश्च
शुक्रः शनिः कालनरस्य दुःखम् ॥ १ ॥
आत्मादयो गगनगैर्बलिभिर्बलवत्तराः ॥ दु-
र्बलैर्दुर्बला ज्ञेया विपरीतः शनिः स्मृतः ॥२॥
राजा रविः शशधरश्च बुधः कुमारः सेनापतिः

**क्षितिसुतः सचिवौ सुरेज्यौ॥ भृत्यस्तथा तरणिजः सबला ग्रहाश्च कुर्वन्ति जन्मसमये निजमेव रूपम् ॥ ३ ॥**

सं०टी— एते स्पष्टार्थाः ॥ १ ॥ २ ॥ ३ ॥

भाषार्थः—कालपुरुषका सूर्य आत्मा है, चंद्रमा चित्त ( मन ) है, बुध वाणी है, बृहस्पति ज्ञान और सुख है, शुक्र मद ( अहंकार ) व हर्ष हैं, शनैश्वर दुःख है ॥ १ ॥ आत्मादिक ग्रहोंके बलवान् होनेसे बलवान् फल और निर्बल होनेसे दुर्बल फल जानिये. और शनैश्वर इससे विपरीत अर्थात् निर्बल होनेसे दुखकी हानि और सबल होनेसे दुखकी वृद्धि ऐसा जानना ॥ २ ॥ सूर्य राजा है, चंद्रमा और बुध कुमार हैं, मंगल सेनापति, बृहस्पति शुक्र सचिव ( मंत्री ) हैं, तथा शनैश्वर भृत्य ( सेवक ) है, इन ग्रहोंमें जो ग्रह बलवान् हों वह जन्मसमयमें अपनेही रूपके समान करते हैं ॥ ३ ॥

### प्राच्यादिदिशास्वामिनः ।

**प्राच्यादीशारविसितकुजराहुयमेन्दुसौम्यवाक्पतयः॥ क्षीणेन्द्वर्कयमाराः पापास्तैः संयुतः सौम्यः ॥ ४ ॥**

सं०टी०– अथातो ग्रहयोनिप्रभेदाध्यायं व्याख्यास्यामः ॥ तत्रादौ ग्रहाणां दिक्साम्यं सौम्यपापत्वं चाह। तत्र पूर्वस्यां दिश्यर्कोऽधिपतिः पूर्वदक्षिणस्यां शुक्रः दक्षिणायां भौमः दक्षिणपश्चिमायां राहुः पश्चिमायां सौरिः पश्चिमोत्तरायां चन्द्रः उत्तरस्यां बुधः उत्तरपूर्वस्यां जीवः। तद्यथापूर्वे रविः आग्नेय्यां शुक्रः दक्षिणे कुजः नैर्ऋत्यां राहुः पश्चिमे शनिः वायव्यां चन्द्रः उत्तरस्यां बुधः ईशान्यां गुरुः क्षीणेन्द्वर्कयमारा इति। कृष्णपक्षस्याष्टम्यां ऊर्ध्वं शुक्लपक्षस्याष्टमो यावत्क्षीणचन्द्रो भवति क्षीणश्चन्द्र आदित्यांङ्गारकशनैश्चराः पापसंज्ञकास्तैः संयुतो बुधोऽपि पापो भवति । एषां पापानां मध्येऽन्यतमेन युक्तो बुधः पाप एव अर्थादेवाऽक्षीणचन्द्रमाः सौम्यः बुधबृहस्पतिशुक्राश्च सौम्या ज्ञेया इति ॥ ४ ॥

भाषार्थः— अब पूर्वादिदिशाओंके स्वामी लिखतेहैं.- पूर्वदिशाका स्वामी सूर्य, पूर्व दक्षिणका कोण ( अग्नि ) का शुक्र, दक्षिणका मंगल, दक्षिणपश्चिमकोण ( नैऋत्य ) का राहु, पश्चिमका शनैश्चर, पश्चिमोत्तरकोण ( वायव्य ) का चन्द्रमा, उत्तरका बुध, उत्तरपूर्वकोण ( ईशान ) का बृहस्पति स्वामी है. यह दिशास्वामी कहकर अब पापग्रह वर्णन करतेहैं- कि क्षीणचन्द्रमा, सूर्य, शनि, मंगल और इनके साथ स्थित बुध यह पापग्रह हैं, शेष ग्रह पूर्णचंद्र शुभग्रह युक्त बुध. बृहस्पति, शुक्र यह शुभग्रह हैं, और कृष्णाष्टमीके उपरांत शुक्लाष्टमीतक चंद्रमा क्षीण जानना ॥ ४ ॥

## पुरुषस्त्रीक्लीवाद्याधिपत्यम् ।

**क्लीबपती बुधसौरी चन्द्रसितौ योषितां नृणां शेषाः ॥ ऋगथर्व सामयजुरधिपा गुरुसौम्य-भौमसिताः ॥ ५ ॥**

सं०टी०-ग्रहाणां स्त्रीपुन्नपुंसकाऽधिपत्यं शाखाधिपत्यं चाह। बुधशनैश्चरौ नपुंसकाधिपती चन्द्रसितौ स्त्रीणामधिपती शेषा आदित्याङ्गारकबृहस्पतयस्ते नृणामधिपतयः प्रयोजनं चोरज्ञानादि । ऋगथर्वेत्यादि। ऋग्वेदाधिपतिर्जीवः अथर्ववेदाधिपतिर्बुधः यजुर्वेदाधिपतिः शुक्रः सामवेदाधिपतिर्भौमः प्रयोजनं बलवति शाखाधिपतौ कुले जातस्तद्विद्याश्रेष्ठब्राह्मणो भवति । ब्राह्मणे चोरे विज्ञाते शाखाविज्ञानं ग्रहपीडायां तच्छाखापठनं पूजनमिति ॥ ५ ॥

भाषार्थः— अब पुरुष स्त्री नपुंसकग्रह और वेदोंके स्वामी कहतेहैं तहां बुध, शनैश्चर क्लीबोंके स्वामी हैं. चन्द्र शुक्र यह दोनो स्त्रियोंके स्वामी हैं. और शेष ग्रह सूर्य,मंगल, गुरु मनुष्योंके स्वामी हैं. यह चौर आदि जाननेमें काम आतेहैं. और बृहस्पति बुध, मंगल,शुक्र यह क्रमसे ऋग्वेद अथर्ववेद, सामवेद, यजुर्वेद, इन वेदोंके स्वामी हैं. यथा ऋग्वेदका बृहस्पति, अथर्ववेदका बुध, सामवेदका मंगल, यजुर्वेदका शुक्र स्वामी है. इनमें जिस वेदका स्वामी जन्मसमय अथवा यज्ञोपवीतकी लग्नमें बलवान् हो उसी वेदमें निपुण होवे यही मुख्य प्रयोजन जानना ॥ ५ ॥

ग्रहाणां ब्राह्मणादिवर्णाधिपत्यम् ।

**जीवसितौ विप्राणां क्षत्रस्यारोष्णगू विशां चन्द्रः ॥ शूद्राधिपः शशिसुतः शनैश्चरः सङ्करभवानाम् ॥ ६ ॥**

सं०टी०— ग्रहाणां वर्णाधिपत्यमाह । जीवशुक्रौ ब्राह्मणानामधिपती सूर्याङ्गारकौ क्षत्रियाणामधिपती चन्द्रो वैश्याधिपतिः बुधः शूद्राधिपतिः शनैश्चरः सङ्करभवानामधिपतिः प्रतिलोमजानां सूतमागधादीनामित्यर्थः ॥ ६ ॥

भाषार्थः—अब सूर्यादिग्रहोंको ब्राह्मणादिकोंके स्वामी कहतेहैं कि बृहस्पति शुक्र ब्राह्मणोंके स्वामी हैं, क्षत्रियोंके मंगल सूर्य स्वामी हैं, वैश्योंका स्वामी चंद्रमा है, शूद्रोंका अधिप बुध है, और शनैश्चर संकरवर्ण सूतमागधादिकोंका स्वामी है. यह प्रश्नलग्नमें विचारसमय ब्राह्मणादिवर्ण जाननेके निमित्त जानना, और चौरज्ञाति जानना यह प्रयोजन है ६॥

ग्रहाणां बलाबलज्ञानम् ।

**बलवान्मित्रस्वगृहोच्चनवांशके वीक्षितः शुभैश्चापि ॥ चन्द्रसितौ स्त्रीक्षेत्रे पुरुषक्षेत्रोपगाः शेषाः ॥ ७ ॥**

सं०टी०— बलाबलप्रकरणमाह । मित्रक्षेत्रस्थो ग्रहो बलवान् भवति स्वगृहस्थः स्वोच्चस्थः स्वनवमांशकस्थश्च उच्चादिसाहचर्यात् त्रिकोणस्थोऽपि यस्मादुक्तं स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलमिति वीक्षितः शुभैश्चापि यतस्तत्रस्थो ग्रहः शुभैर्दृष्टो बलवान् भवति चन्द्रसितौ स्त्रीक्षेत्रे वृषादौ समराशौ व्यवस्थितौ बलिनौ भवतः शेषा आदित्याङ्गारकबुधजीवसौरयः पुरुषक्षेत्रस्थाः विषमराशौ मेषादौ व्यवस्थिताः बलवन्तो ज्ञेया इति ॥ ७ ॥

भाषार्थः—अब ग्रहोंका बलाबलविचार लिखते हैं.— कि मित्रराशिमें स्थित ग्रह बलवान् होताहै और अपनी राशिमें तथा अपने उच्चमें अथवा अपने नवांशामें वा शुभग्रहोंसे देखाजाय जो ग्रह सो बलवान् होता है

और चंद्रमा शुक्र स्त्रीराशि वृ० क० क० वृ०म०मी इन राशियोंमें स्थि हों तो वलवान् होतेहैं और शेष जो सूर्य, मंगल, बुध, बृहस्पति, श सो पुरुषराशि मे०मि० सिं०तु०ध०कुं०में स्थित वलवान् जानना ॥ ७

### ग्रहाणां दिग्वलं चेष्टावलम् ।

**प्राच्याद्या जीवबुधौ सूर्यारौ भास्करिः शशाङ्कसितौ ॥ उदगयने शशिसूर्यौ वक्रेऽन्ये स्निग्धविपुलाश्च ॥ ८ ॥**

सं०टी०— दिग्बलचेष्टाबलयोर्ज्ञानार्थमाह । पूर्वदिक्स्थौ जीवबुधौ बलिनौ भवतः लग्नगतावित्यर्थः । आदित्याङ्गारकौ दक्षिणस्थौ बलिनौ दशमस्थावित्यर्थः। शनैश्चरः पश्चिमस्थो बली लग्नात् सप्तमस्थ इत्यर्थः चन्द्रशुक्रावुत्तरस्थौ बलिनौ चतुर्थावित्यर्थः एतद्दिग्बलम् अथ चेष्टाबलम् उदगयनइत्यादि—मकरादिराशिषट्के वर्त्तमानोदगयनस्थो भवति कर्क्कादिराशिषट्के वर्तमानो दक्षिणायनस्थश्च तत्रोत्तरायणस्थौ अर्कशशिनौ बलिनौ । वक्रेऽन्ये स्फुटगत्या प्रतीपगतय वक्रिण उच्यन्ते भौमादयो वक्रगताश्च बलिनो भवन्ति तथा गगने स्निग्धा दृश्यमाना बलिनो भवन्ति विपुला बृहत्प्रमाणा दृश्या वा ॥८॥

भाषार्थः—अब ग्रहोंका दिग्बल और चेष्टाबल कहतेहैं.— कि बृहस्पति, बुध पूर्वदिशामें अर्थात् जन्मलग्नमें स्थित हों तो बली, और सूर्य, मंगल, दक्षिणदिशा ( दशवें घर ) में बली० और शनि पश्चिममें अर्थात् सप्तम घरमें बली जानना तथा चंद्रमा शुक्र उत्तर ( चतुर्थस्थान )में स्थित होंतो बली जानना और मकरसे मिथुन राशितक उत्तरायणसंज्ञा उसमें स्थित चंद्र, सूर्य बली जानना और कर्कसे धनुतक छे राशि दक्षिणायनसंज्ञक हैं. इसमें स्थित मंगलादिक वक्र ग्रह बली होतेहैं. तथा स्निग्ध अर्थात् आ कारामें दृश्यमान (उदय) ग्रह बली होते हैं. विपुल शरीरवाले अर्थात् युद्ध समय ग्रहका शरीर बड़ा होताहै उससमय युद्धस्थित ग्रह बली जानना ॥ ८ ॥

### ग्रहाणां कालबलम् ।

**अहनि सितार्कसुरेज्या द्युनिशं ज्ञो नक्तमिन्दु-**

कुजसौराः ॥ स्वदिनादिष्वशुभशुभा बहुलो-त्तरपक्षयोर्बलिनः ॥ ९ ॥

सं०टी०—कालबलमाह। अहनि दिवसे शुक्रादित्यजीवा बलिनः। बुधः द्युनिशं अहोरात्रं बली। नक्तं रात्रौ चन्द्राङ्गारकशनैश्वरा बलिनः। स्वदिनादिष्विति-स्वदिवसे सर्वे ग्रहाः बलिनो भवन्ति। आदिग्रणात् स्वाब्दे स्वमासे स्वकाले होरायां च। अशुभशुभा इति। अशुभाः पापाः बहुलपक्षे कृष्णपक्षे बलिनः शुभाः सौम्याः शुक्लपक्षे बलिनः ॥ ९ ॥

भाषार्थः—अब ग्रहोंका कालबल कहतेहैं— कि शुक्र, सूर्य, बृहस्पति दिनमें बली, और बुध द्युनिशं कहिये दिवा रात्रि दोनोंमें बली और चंद्रमा, मंगल, शनैश्चर यह नक्तं कहिये रात्रिमें बली होतेहैं, और अपने अपने दिनमें सब ग्रह बली होतेहैं और अशुभ कहिये पापग्रह बहुल (कृष्ण) पक्षमें बली, तथा शुभ जो हैं शुभग्रह सो शुक्लपक्षमें बलवान् हैं ॥ ९ ॥

## ग्रहाणां नैसर्गिकबलम्।

मन्दारसौम्यवाक्पतिसितचन्द्रार्का यथोत्तरं बलिनः ॥ नैसर्गिकबलमेतद्बलसाम्येऽस्मादधिकचिन्ता ॥ १० ॥

सं० टी०—नैसर्गिकबलमाह। सर्वेभ्यो ग्रहेभ्यो मन्दो हीनबलः मन्दादङ्गारको बलवान् अङ्गारकाद् बुधः बुधाज्जीवः जीवाच्छुक्रः शुक्राच्चन्द्रः चन्द्रादादित्यः एतद् ग्रहाणां नैसर्गिकं स्वाभाविकबलं। बलसाम्येऽस्मादधिकचिन्ता। यत्र पूर्वोक्तं ग्रहयोस्तुल्यबलं भवति तत्र नैसर्गिकबलेन चाधिकबलः स ततो बलवान् भवति ॥ १० ॥

भाषार्थः—अब ग्रहोंका नैसर्गिक बल कहतेहैं,— कि शनैश्चर सब ग्रहोंसे हीन बली है, शनैश्चरसे मंगल बली है, मंगलसे बुध, बुधसे बृहस्पति, बृहस्पतिसे शुक्र, शुक्रसे चंद्रमा, चंद्रमासे सूर्य बली हैं, यह ग्रहोंका यथोत्तरक्रमसे नैसर्गिकबल स्वभावहीसे है. इनमें जो समानबल होय, वहां स्वभावबल है और जो अधिकबली होय सोई बलवान् जानना ॥ १० ॥

### ग्रहाणां स्थानबलम्।

**मित्रक्षेत्रे स्वोच्चे स्वहोरायां स्वभवनत्रिकोणे च ॥ स्वद्रेष्काणे स्वांशे स्वदिने च बलान्विताः सर्वे ॥ ११ ॥**

सं०टी०–स्थानबलज्ञानमाह। मित्रक्षेत्रस्थो ग्रहो बलवान् भ स्वोच्चस्थः स्वगृहस्थः स्वत्रिकोणस्थः स्वद्रेष्काणस्थः स्वहोरा स्वांशस्थः स्वदिनस्थः एतेषु स्थानेषु स्थितो ग्रहो बलवान् भवति

भावार्थः—अब ग्रहोंका स्थानबल कहतेहैं.– मित्रके घरमें ग्रह बलवान् होताहै, और अपने उच्च राशिमें स्थित ग्रह बली हो तथा जो ग्रह अपने होरामें अथवा अपने घरमें वा अपने मूलत्रिको अपने द्रेष्काण वा नवांशामें स्थित हो वह बलवान् होताहै. और दिनमें सब ग्रह बलसंयुक्त होतेहैं ॥ ११ ॥

### दृष्टिविचारः।

**पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः ॥ चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रे च ॥ १२ ॥**

सं०टी०— स्पष्टार्थः ॥ १२ ॥

भावार्थः— अब ग्रहोंकी दृष्टिका विचार कहते हैं- कि शनै जहां जिस स्थानमें होवे वहांसे तीसरे और दशवें स्थानको पूर्ण दृ देखताहै, और बृहस्पति त्रिकोण कहिये नवम पंचम घरको अपने पूर्ण देखता है, तथा भूमिसुत कहिये मंगल अपने स्थानसे चतुरस्र हिये चौथे आठवें स्थानको पूर्ण देखता है. और शुक्र, सूर्य, बु चन्द्रमा, यह अपने स्थानसे सप्तमघरको पूर्ण देखते हैं ॥ १२

**दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रं च ॥ पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ॥ १३ ॥**

सं० टी०-दृष्टिज्ञानार्थमाह । यस्मिन् स्थाने ग्रहः स्थितः तस्मा-द्दशमे तृतीये च पाददृष्ट्या पश्यति, नवमे पञ्चमे चार्धदृष्ट्या पश्यति चतुर्थाष्टमे पादहीनं पश्यति, त्रिभिः पादैरित्यर्थः । कलत्रं सप्तमं सम्पूर्णदृष्ट्या पश्यति । एवं सर्वे ग्रहाः पश्यन्ति फलानि चैवं प्रयः-च्छन्ति । यत्र पादमेकं पश्यति तत्र पादमेकं फलं ददाति । यत्र पादद्वयं पश्यति तत्र पादद्वयफलं यत्र पादत्रयं पश्यति तत्र पादत्रयफलं यत्र सम्पूर्णं पश्यति तत्र सम्पूर्णफलम् ॥ १३ ॥ इति श्रीभट्टोत्पल-विरचितायां लघुजातकटीकायां बलाबलविचाराध्यायो द्वितीयः समाप्तः ॥ २ ॥

भाषार्थः—जिस स्थानमें ग्रह स्थित हों वहांसे दशम तृतीय स्थानको एकचरणसे देखतेहैं, और नवम पंचमस्थानको दो चरणसे, चतुर्थ अष्टम स्थानको तीन चरणसे, और सातवें घरको पूर्णदृष्टिसे देखतेहैं, यह ग्रहोंकी चरणवृद्धिक्रमसे दृष्टि होतीहै, और जिसप्रकार जितनी दृष्टि होतीहै उसीप्रकार उतनाही फल देतेहैं ॥ १३ ॥

इति श्रीमत्पण्डितनारायणप्रसादविरचितायां लघुजातकभाषाटीकायां बलाबलविचाराध्यायो द्वितीयः ॥ २ ॥

## तत्रादौ निसर्गतत्कालमित्राणि ।

मित्राण्यर्कोज्जीवो शशुरू शसितौ विभास्करा विकुजाः ॥ वीन्द्वर्का विकुजरवीन्दवश्च केषां-चिदरयोऽन्ये ॥ १ ॥

सं० टी०-अथ मित्रप्रकरणमारभ्यते॥ तत्रादौ परमतया मित्रामि-त्राण्याह । अर्कात् प्रभृति मित्राणि तत्रादित्यस्य जीवो मित्रं शेषाः शत्रवः चन्द्रस्य बुधजीवौ मित्रे शेषाः शत्रवः कुजस्य बुधशुक्रौ मित्रे शेषाः शत्रवः बुधस्य विगतार्काः सर्वे मित्राणि रविः शत्रुः जीवस्य विगतकुजाः सर्वे मित्राणि कुजः शत्रुः शुक्रस्य विगतचन्द्रार्काः सर्वे मित्राणि चन्द्रार्कौ तस्य शत्रू शनैश्चरस्य विगताङ्गारकसूर्यचन्द्राः सर्वे मित्राणि चन्द्रार्कभौमास्तस्य शत्रवः एतत्केषांचिदाचार्याणां मतम् ॥ १ ॥

भाषार्थः—अब ग्रहोंका मित्रामित्र वर्णन करतेहैं.-- तहां सू
ग्रहोंके मित्र इस प्रकार हैं कि सूर्यके बृहस्पति मित्र शेष ग्रह श
मंगलके बुध शुक्र मित्र हैं शेष शत्रु हैं, बुधके सूर्यको छोड़ सब
मित्र हैं सूर्य शत्रु हैं, बृहस्पतिके मंगलको छोड़ सब ग्रह मित्र
मंगल शत्रु है, शुक्रके चंद्रमा सूर्यको छोड़ शेष ग्रह मित्र हैं. चंद्र
शत्रु हैं, शनैश्चरके मंगल, सूर्य, चंद्रको छोड़ शेष सब ग्रह मित्र हैं,
सूर्य, मंगल, ये शत्रु हैं, यह कोई आचार्योंका. मत है. आगे
आचार्योंका लिखतेहैं ॥ १ ॥

शत्रू मन्दसितौ समश्च शशिजो मित्राणि
शेषा रवेस्तीक्ष्णांशुर्हिमरश्मिजश्चसुहृदौ शेषाः
समाः शीतगोः ॥ जीवेन्दूष्णकराः कुजस्य
सुहृदो ज्ञोऽरिः सितार्कीं समौ मित्रे सूर्यसितौ
बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ २ ॥
सूरेः सौम्यसितावरी रविसुतो मध्योऽपरे
त्वन्यथा सौम्यार्कीं सुहृदौ समौ कुजगुरू
शुक्रस्य शेषावरी ॥ शुक्रज्ञौ सुहृदौ समः
सुरगुरुः सौरेश्च अन्येऽरयस्तत्काले च दशा
११ ऽयबन्धु ४ सहज३ स्वाऽन्त्येषु १२ मित्रं
स्थिताः ॥ ३ ॥

सं॰ टी॰— अथ सत्यमतमङ्गीकुर्वन् मित्रादिविभागं सर्वग्रहा
तात्कालिकं मित्रामित्रं चाह । रवेर्मन्दसितौ शत्रू बुधः समः शे
ग्रहाः चन्द्राङ्गारकजीवाः रवेर्मित्राणि एवमादित्यस्य अथ चन्द्र
तीक्ष्णांशुरित्यादि शीतगोश्चन्द्रस्यार्कबुधौ मित्रे शेषा भौमजीवशु
सौरा अस्य समाः मध्यस्था इत्यर्थः । एवं चन्द्रस्य अथाङ्गारक

जीवेन्दूष्णकरा इति । कुजस्य भौमस्य जीवेन्दूष्णकराः गुरुचन्द्रसूर्याः मित्राणि । ज्ञो बुधः शत्रुः सितार्की शुक्रमन्दौ समौ मध्यस्थौ । एवमङ्गारकस्य । अथ बुधस्य मित्रे सूर्यसिताविति । बुधस्यादित्यशुक्रौ मित्रे हिमगुश्चन्द्रः शत्रुः समाश्चापरे भौमजीवशनैश्चराः बुधस्य समा मध्यस्थाः एवं बुधस्य ॥ २ ॥ अथ गुरोः सूरेरिति । सूरेर्बृहस्पतेः सौम्यसितौ बुधशुक्रौ शत्रू रविसुतः शनैश्चरो मध्यस्थः अपरे तु मित्राणि चन्द्राङ्गारकार्का गुरोर्मित्राणि एवं जीवस्य। अथ शुक्रस्य सौम्यार्काविति। शुक्रस्य बुधसौरी मित्रे समौ कुजगुरू भौमजीवौ मध्यस्थौ शेषावर्कचन्द्रावरी एवं शुक्रस्य । अथ सौरस्य । शुक्रज्ञावितिशनेः शुक्रबुधौ मित्रे जीवः समः अन्ये चन्द्रार्कभौमा अरयः । एवम् सौरस्य नैसर्गिकमित्रामित्रविभागमुक्त्वा तात्कालिकमाह । तत्काले चेति । दृष्टकाले यस्मिन् स्थाने ग्रहः स्थितस्तस्माद्दशमस्थाने एकादशे चतुर्थे तृतीये द्वितीये अन्त्ये द्वादशे यो ग्रहः स्थितः स तात्कालिकमित्रं भवति ३

भाषार्थः—अब वराहमिहरजी अपने मतसे ग्रहोंका मित्रामित्र तीन श्लोकोंकरके वर्णन करते हैं.-- कि रवि ( सूर्य )के शनि शुक्र शत्रु हैं बुध सम है शेष चं० मं० वृ० मित्र हैं, और चंद्रमाके तीक्ष्णांशु कहिये

नैसर्गिकमैत्रीचक्रम् ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्र. |
|---|---|---|---|---|---|---|---|
| चं. मं.बृ. | सू. बु. | सू.चं. बृ. | सू.रा. शु. | सू.चं. मं. | बु.श. रा. | बु.शु. रा. | मित्र |
| बु. | मं.बृ. शु.श. | शु.रा. श. | मं.बृ. श. | श.स. | मं. बृ. | बृ. | सम |
| शु.रा. श. | ० | बु. | चं. | बु.शु. | सू.चं. | सू.चं. मं. | शत्रु |

सूर्य और हिमरश्मिज ( बुध ) मित्र हैं, और शेष मं. बृ. शु. श. सम हैं. मंगलके बृ. चं. सू. मित्र हैं, बुध शत्रु है, शुक्र, शनि सम हैं, बुधके सू. शु. मित्र हैं. चंद्रमा शत्रु है, शेष मं. बृ. श. सम हैं ॥ २ ॥ बृहस्पतिके बु. शु. शत्रु हैं, शनैश्चर सम, शेष सू. चं. मं. मित्र जानना, शुक्रका बु. श. मित्र है, मं. बृ. सम, शेष सू. चं. शत्रु है, एवं शनिका शु. बु. मित्र, बृ. सम, अन्य सू. चं. मं. शत्रु हैं.

३

अब तत्कालमित्र कहते हैं-कि जिस स्थानमें जो ग्रह स्थित हो वह १०।११।४।३।२।१२ स्थानमें जो ग्रह हो वह उसका तत्कालमित्र जानना. शेष १।५।६।७।८।९ इन स्थानोंमें स्थित ग्रह उसका तत्काल जानना ॥ ३ ॥

**मित्रमुदासीनोऽरिर्व्याख्याता ये निसर्गभावेन ॥ तेऽधिसुहृन्मित्रसमास्तत्कालमुपस्थिताश्चिन्त्याः ॥ ४ ॥**

सं० टी०—मित्रस्थानानां प्रयोजनमाह । दर्शितेषु मित्रस्थ दशादिकेषु मित्रमवस्थितमधिमित्रं भवति मध्यमस्थं मित्रं भवति न्नुर्व्यवस्थितो मध्यस्थो भवति अर्थादेव मित्रस्थानव्यतिरिक्तानि नानि शत्रुस्थानानि भवन्ति । तानि च प्रथमपञ्चाष्टषट्सप्तमनव तेषु स्थानेषु ग्रहस्य नैसर्गिकः शत्रुर्व्यवस्थितोऽधिशत्रुर्भवति । ध्यस्थो व्यवस्थितः शत्रुर्भवति मित्रमवस्थितः समोभवति ॥४॥

भाषार्थः—अब पंचधा मैत्रीका लक्षण कहते हैं—कि निसर्गभाव जो मित्र सम शत्रु कहे गयेहैं वे तत्कालमित्रामित्रके संयोगसे अ मित्र, मित्र, सम, शत्रु, अधिशत्रु करके पंचधामैत्री जो होती है आगे लिखेक्रमसे चिंतमन करना, जैसे नैसर्गिकमित्र तत्कालमित्र अधिमित्र, और तत्कालमित्र नैसर्गिकसम मिलके मित्र, और तत्का मित्र नैसर्गिकशत्रु होनेसे सम, और नैसर्गिकमित्र तत्कालशत्रु होने सम, और नैसर्गिक सम तत्कालशत्रु होकर शत्रु, और नैसर्गिक तत्कालशत्रु मिलके अधिशत्रु जानना ॥ ४ ॥

**मूलत्रिकोणषष्ठत्रिकोणनिधनैकराशिसप्तमगाः एकैकस्य यथा सम्भवन्ति तात्कालिका रिपवः ॥५॥ इति श्रीव०कु०मि०तृतीयोऽध्यायः ॥३॥**

सं०टी०—मूलत्रिकोणेति ।" अर्कादीनां मूलत्रिकोणानि सिं षाजप्रमदाकार्मुकभृत्तौलिकुम्भधराः" इति । षष्ठं त्रिकोणं नव निधनमष्टमं एकराशिः सप्तमस्था तात्कालिका रिपवो भवन्ति ॥ इति श्रीभ०विर०लघु०टीकायां मित्रामित्रप्रकरणाध्यायस्तृतीयः ।

भाषार्थः—मूलत्रिकोण तथा जो ग्रह जिस स्थानमें स्थित हो वहांसे छठे और त्रिकोण कहिये नवम पंचम, नैधन ( अष्टम ) तथा एकराशिमें, और सप्तम, इन स्थानोंमें स्थित हों वे ग्रह उसके तत्कालशत्रु होतेहैं॥८॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां मित्रामित्रविचाराध्यायस्तृतीयः ॥ ३ ॥

## अथ ग्रहयोनिप्रभेदाध्यायः ॥ तत्रादौ सूर्यस्वरूपम् ॥

**चतुरस्रो नात्युच्चस्तनुकेशः पैत्तिकोऽस्थिसारश्च॥ शूरो मधुपिङ्गाक्षो रक्तः श्यामः पृथुश्चार्कः ॥ १ ॥**

सं० टी०—अथ ग्रहाणां स्वरूपमाह। चतुरस्रो न्यग्रोधमण्डलाकारः यावदेव प्रसारितभुजद्वयस्य विस्तीर्णत्वं तावदेवास्यदैर्घ्यम् नात्युच्चः किञ्चिदुच्च एव तनुकेशो विरलकेशः पैत्तिकः पित्तप्रकृतिः अस्थिसारो दृढास्थिः शूरः सङ्ग्रामप्रियः मधुपिङ्गाक्षः ईषत्पिङ्गललोचनः रक्तश्यामो लोहितश्यामः रक्तश्चासौ श्यामश्च पृथुर्विस्तीर्णशरीरः एवंविधोऽर्कः ॥ १ ॥

भाषार्थः—अब सूर्यादिग्रहोंका स्वरूप वर्णन करते हैं. तहां प्रथम सूर्यका स्वरूप कहते हैं—कि चतुरस्र कहिये लंबाई चौड़ाई बराबर चतुष्कोण, और बहुत ऊंचे नहीं, तथा थोड़े केश हैं, पित्तप्रकृति और, अस्थि बहुत हैं तथा स्थूल हैं, शूर कहिये संग्राम जिनको प्रिय है, कुछ पीले तथा लाल नेत्र जिनके, और रक्तश्यामवर्ण अंग जिनका और पृथु कहिये विस्तीर्ण ( चौड़ा ) शरीर है, ऐसा सूर्यका स्वरूप है॥१॥

### अथ चन्द्रस्य स्वरूपम् ॥

**स्वच्छः प्राज्ञो गौरश्चपलः कफवातिको रुधिरसारश्च ॥ मृदुवाक् घृणी प्रियसखस्तनुवृत्तश्चन्द्रमाः प्रांशुः ॥ २ ॥**

सं० टी०—स्वच्छो दर्शनीयः प्राज्ञो मेधावी गौरः श्वेतप्रायः चपलः क्रियास्वनवस्थितः कफवातिको वातश्लेष्मप्रकृतिः रुधिरसारो रक्ता-

धिकः मृदुवाक्कोमलभाषी घृणी दयावान् प्रियसखो मित्रप्रियः तनुः कृशावर्तुलाङ्गः प्रांशुरुच्चः एवंविधश्चन्द्रमाः॥ २ ॥

भाषार्थः— चंद्रमाका स्वरूप कहते हैंः–स्वच्छ ( दर्शनीय ) ( बुद्धिवान् ), गौरवर्ण, चंचल, कफ और वातसंयुक्त प्रकृति, र आधिक्यता, कोमल भाषण करनेवाला, घृणी कहिये दयावान्, मि प्यारा और प्रीति रखनेवाला और दुर्बल तथा दुर्बलाकार शरीरवाला, प्रांशुः कहिये ऊंचा अथवा लंबायमान ऐसा चन्द्रमा है ॥ २ ॥

## अथ भौमस्य स्वरूपम् ।

हिंस्रो ह्रस्वस्तरुणः पिङ्गाक्षः पैत्तिको दुराधर्षः चपलः सरक्तगौरो मज्जासारश्च माहेयः॥ ३॥

सं० टी०—हिंस्रो दुष्टो ह्रस्वोऽल्पोच्छ्रायः तरुणः सदैवतरुण पिङ्गाक्षः कपिलनेत्रः पैत्तिकः पित्तप्रकृतिः दुराधर्षः दुराचारी लोऽनेकमतिः सरक्तगौरः पद्मपत्राग्रवर्णः मज्जासारो मज्जाधिकः विधो माहेयोऽङ्गारकः ॥ ३ ॥

भाषार्थः— मंगलका स्वरूप कहतेहैं.–मंगल हिंसा करनेवाला, शरीर, सर्वदा तरुण ( ज्वान ), पिंगाक्ष कहिये भूरे नेत्रवाला, पि कृति, निर्भय चित्तवाला, तथा चंचलस्वभाव, और रक्तवर्णयुक्त गौ और मज्जा अधिक ऐसा माहेय कहिये मंगलका स्वरूप है ॥ ३ ॥

## बुधस्वरूपम् ।

मध्यमरूपः प्रियवाक् दूर्वाश्यामः शिराततो निपुणः ॥ त्वक्सारस्त्रिस्थूणः सततं हृष्टस्तु चन्द्रसुतः ॥ ४ ॥

सं० टी०—अथ बुधस्याह । मध्यमरूपो न दर्शनीयः नाप्यद नीयः प्रियवाक् अभिमतवक्ता दूर्वाश्यामः शाद्वलवर्णाभः शिरा दृश्यस्नायुः निपुणः क्रियासु सूक्ष्मदृक् त्वक्सारः स्थूलत्वक् त्रिस्थ वातपित्तकफप्रकृतिः सततं हृष्टो नित्यं हर्षितः एवंविधो बुधः ॥

भाषार्थः— अब बुधका स्वरूप वर्णन करतेहैं.– कि म अर्थात् न दर्शनीय और न कुरूप ऐसा सामान्य स्वरूप, और

वादी, दूर्वाके समान रंगके शरीरवाला, बहुत नसोंसे युक्त शरीर तथा निपुण, त्वक्सार कहिये मोटी देह और त्रिस्थूण कहिये वात-पित्त-कफ-प्रकृति तथा निरंतर प्रसन्नचित्त ऐसा बुधका स्वरूप जानना ॥ ४ ॥

## गुरुस्वरूपम् ।

**मधुनिभनयनो मतिमानुपचितमांसः कफात्मको गौरः ॥ ईषत्पिङ्गलकेशो मेदःसारो गुरुरदीर्घः ॥ ५ ॥**

सं० टी०—बृहस्पतेराह। मधुनिभनयनः ईषत्कातरलोचनः मतिमान् बुद्धिमान् उपचितमांसः स्थूलदेहः कफात्मकः श्लेष्मप्रकृतिः गौरः श्वेतप्रायः ईषत्पिङ्गलकेशः मेदःसारो मेदोऽधिकः अदीर्घः ह्रस्वः एवंविधो गुरुः ॥ ५ ॥

भाषार्थः— बृहस्पतिका स्परूप कहतेहैं.—कुछ भूरे नेत्र, और बुद्धिवान्, स्थूल शरीर, कफप्रकृति, गौरवर्ण, कुछ कुछ भूरे केश, मेदकी आधिक्यता, विस्तरित और छोटा शरीर ऐसा बृहस्पतिका स्वरूप है ॥८॥

## शुक्रस्वरूपम् ।

**श्यामो विकृष्टपर्वा कुटिलासितमूर्द्धजः सुखी कान्तः ॥ कफवातिको मधुरवाग्भृगुपुत्रः शुक्रसारश्च ॥ ६ ॥**

सं० टी०—श्यामः किञ्चित्कृष्णाङ्गः विकृष्टपर्वा विरलशरीरसन्धिः कुटिलासितमूर्द्धजः कुञ्चितकृष्णकेशः सुखी भोगी कान्तो दर्शनीयः कफवातिको वातश्लेष्मप्रकृतिः मधुरवाक्कोमलभाषी शुक्रसारः शुक्राऽधिकः एवंविधः शुक्रः ॥ ६ ॥

भाषार्थः— अब शुक्रका स्वरूप वर्णन करतेहैं.—कि कुछ कृष्णवर्ण अंग जिसका, और विकृष्टवर्ण कहिये शरीरकी बिरली संधियां हैं जिसकी, तथा कुटिल ( टेढ़े ) असित ( कालेरंग ) मूर्धज कहिये केश हैं जिसके, और सुखी, कांतिमान्, कफ-वात-प्रकृति, मधुर भाषण करनेवाला, और वीर्य अधिक ऐसा शुक्रका स्वरूप जानना ॥ ६ ॥

शनिस्वरूपम् ।

कृशदीर्घः पिङ्गाक्षः कृष्णः पिशुनोऽलसोऽनिलप्रकृतिः ॥ स्थूलनखदन्तरोमा शनैश्चरो स्नायुसारश्च ॥ ७ ॥

सं० टी०—अथ शनेश्चाह । कृशदीर्घो दुर्बलोन्नतः पिङ्गाक्षः कपिलनेत्रः कृष्णः प्रसिद्धः पिशुनः पररन्ध्रसूचकः अलसो मन्थरगामी अनिलप्रकृतिः वातात्मकः स्थूलनखदन्तरोमा स्नायुसारः एवंविधः शनैश्चरः ॥ ७ ॥

भाषार्थः— अब शनैश्चरका स्वरूप कहतेहैं.–कि कृश कहिये दुर्बल और दीर्घ ( बड़ा अथवा लंबा ) शरीर, तथा पिंगाक्ष ( भूरे नेत्र ) कृष्णवर्ण, पिशुन कहिये परनिन्दक, और आलस्ययुक्त, वातप्रकृति, बड़े नख, दांत, रोम बड़े हैं जिसके, बहुत नसोंसे युक्त देह ऐसा शनैश्चरका स्वरूप है ॥ ७ ॥

एते ग्रहा बलिष्ठा प्रसूतिकाले नृणां स्वमूर्तिसमम् ॥ कुर्युर्देहं नियतं बहवश्च समागता मिश्रम् ॥ ८ ॥

इति श्रीवराहमिहरकृते लघुजातके ग्रहयोनिप्रभेदोनाम चतुर्थोऽध्यायः ॥ ४ ॥

सं० टी०—स्पष्टार्थः ॥ ८ ॥ इति ग्रहस्वरूपप्रकरणम् ॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां ग्रहयोनिप्रभेदोनाम द्वितीयोऽध्यायः ॥ २ ॥

भाषार्थः— ग्रहोंके स्वरूपका प्रयोजन कहतेहैं.–कि यह ग्रह बलवान् होवें तो जन्मसमय अपनेही स्वरूपके समान जातकका देह नियत करतेहैं और बहुत मिलेहुये ग्रह मिश्रित फल करतेहैं ॥ ८ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां ग्रहयोनिप्रभेदोनाम चतुर्थोऽध्यायः ॥ ४ ॥

अथाधानाध्यायः । तत्रादौ आधाने मैथुनल० ॥ ४ ॥

आधानेऽस्तग्रहं यत्तच्छीलो मैथुने पुमान् भवति ॥ सायासमसद्युतवीक्षिते विदग्धं शुभैरस्ते ॥ १ ॥

सं०टी०—अथाधानं व्याख्यास्यामः । तत्रादौ मैथुनकृतज्ञानमाह । आधानं बीजक्षेपः तत्र आधाने प्रश्नकाले च यो लग्नराशिस्तस्माद्यो राशिः सप्तमः तन्नामा जन्तुर्येन प्रकारेण मैथुनं करोति तेन प्रकारेण युक्तः मैथुनकारी पुमानिति वक्तव्यम् । तस्मिन्सप्तमे स्थाने पापग्रहयुते दृष्टे वा तन्मैथुनं सायासं श्रममयुक्तमासीत् । तस्मिन्नेव सप्तमे स्थाने शुभैर्युते दृष्टे वा विदग्धं श्रमरहितं च ॥ १ ॥

भाषार्थः— अब आधानाध्यायवर्णन करतेहैं.-तहां प्रथम मैथुनज्ञान कहतेहैं. आधानप्रश्नमें प्रश्नलग्नसे अथवा आधानलग्नसे यद्वा जन्मलग्नसे जो सातवीं राशि है उस राशिका जैसा स्वभाव होवे वैसाही मैथुन मनुष्यका कहिये अर्थात् सप्तमराशिमें शुभग्रह स्थित हों अथवा शुभग्रह देखते होवें तो गर्भाधानसमयमें श्रमरहित प्रसन्नतापूर्वक मैथुन कहना, तथा शुभग्रह पापग्रह दोनों स्थित हों वा देखते हों तो सामान्य हर्ष-शोक-युक्त मैथुन कहना और पापग्रह युक्त दृष्ट हो तो खेदयुक्त मैथुन कहना ॥ १ ॥

॥ दीपज्ञानम् ॥

सौरांशेऽब्जांशे वा चन्द्रः सौरान्वितोऽथ हिबुके वा ॥ शान्तो दीपो जन्मन्याधाने प्रश्नकाले वा ॥ २ ॥

सं० टी०—आधानकाले जन्मकाले प्रश्नकाले वा दीपस्याभावज्ञानमाह । सौरांशे यत्र यत्र राशौ मकरकुम्भयोरन्यतरनवांशस्थे चन्द्रमसि तमस्यन्धकारे आधानं प्रसवश्च वक्तव्यः । अब्जांशे वा कर्कटमीनयोरन्यतमनवांशस्थे वा चन्द्रमसि तमस्येव । अथवा यत्र य-

न्नावस्थितचन्द्रमाः शनैश्चरयुतस्तदा तमस्येव अथवा लग्नाच्चन्द्रश्चतु भवति तदाऽन्धकारएव शान्तो दीपः प्रशान्त इत्यर्थः । एतदाधान ग्नात् जन्मलग्नात् प्रश्नलग्नाच्च विचारणीयं । अत्र सर्वयोगेषु यद्यर्क क्तश्चन्द्रमा भवति तदाऽन्धकाराभावः ॥ २ ॥

भाषार्थः— अब आधानसमय वा जन्मसमयमें अंधकार व प्रका जाननेके निमित्त कहतेहैं, कि प्रश्नकाल वा आधानकाल अथवा जन्म कालमें जो चंद्रमा शनैश्चरके नवांशमें हो अथवा चंद्रमा शनियुक्त अथवा चतुर्थ स्थानमें हो तो आधानसमयमें अथवा जन्मसमय शांतदीप ( अन्धकार ) कहना; और जो सूर्यकी दृष्टि चंद्रपर हो अंधकार नहीं, उजालेमें आधान वा जन्म जानना ॥ २ ॥

## ॥ सूतिकालज्ञानम् ॥

उदयति मृदुभांशे सप्तमस्थे च मन्दे यदि भवति निषेकः सूतिरब्दत्रयेण ॥ शशिनि तु विधिरेष द्वादशेऽब्दे प्रकुर्यान्निगदितमिह चिन्त्यं सूतिकालेऽपि योगाः ॥ ३ ॥

सं०टी०–स्पष्टार्थः ॥ ३ ॥

भाषार्थः— आधानलग्नमें जो शनिका नवांश हो और शनि सप्तम हो तो वह प्रसव ३ वर्षमें हो तथा जो लग्नमें कर्कनवांश और चन्द्रमा सप्तम हो तो प्रसव १२ वर्षमें होगा ॥ ३ ॥

## आधानात् शुभाशुभज्ञानम् ।

यमवक्रौ द्यूनेऽर्कात्पुंसो रोगप्रदौ स्त्रियश्चन्द्रात् तन्मध्यगयोर्मृत्युस्तदेकयुतदृष्टयोश्चैवम् ॥ ४ ॥

सं० टी०—आधानजन्ममध्ये शुभाऽशुभज्ञानमाह । आधानकाले प्रश्नकाले वा अर्काक्रान्तराशितः सप्तमे स्थाने यदि शनिभौमौ भव तस्तदा प्रसवादर्वाक् पुरुषस्य रोगदौ व्याधिकरावित्यर्थः । एवं चन्द्रा द्यवस्थितौ स्त्रियो रोगकरौ भवतः । तन्मध्यगतयोः मृत्युः । तदि शनैश्चराङ्गारकौ तयोर्मध्यस्थितयोश्चन्द्रार्कयोर्यथासङ्ख्येन स्त्रीपुंसोर्मृ

त्युकरौ भवतः । तदेकयुतदृष्टयोश्चैवमिति तयोः शनिभौमयोर्मध्यात् एकेन भानुर्यदा युक्तः परेण दृश्यते तदा प्रसवादर्वाक् पुंसो मरणं भवति तयोरेकेन युक्तं चन्द्रमसं यदाऽपरः पश्यति तदा प्रसवादर्वाक् स्त्री म्रियते इति ॥ ४ ॥

भाषार्थः– गर्भाधानके उपरांत जन्मसे प्रथम माता पिताको शुभाशुभ ज्ञानार्थ कहतेहैं.–कि गर्भाधानलग्नसे जिस स्थानमें सूर्य हों वहांसे सप्तमस्थ शनैश्चर अथवा मंगल हो तो जन्मसे प्रथम उसका पिता रोगी हो, तथा चंद्रमासे सप्तमस्थानमें शनि मंगल हो तो माता रोगयुक्त होवै और शनि मंगलके बीच सूर्य चंद्रमा हों तो माता पिता दोनोंको हानिकारक होवें. यथा सूर्यसे एक बारहवें एक दूसरे, शनि मंगल यह दोनों स्थित हों तो पिताकी हानि करें, चंद्रमा दोनोंके मध्य हो तो माताकी हानि करैं अथवा शनि और मंगल इनमेंसे कोई एक सूर्यके-साथ हो वा सूर्यको देखता हो तो पिताको हानि पहुँचावे और चन्द्रमासे युक्त वा दृष्ट हो तो माताकी मृत्यु करै ॥ ४ ॥

आधानात् मासाधिपतयः । तत्प्रयोजनम् ।

**कलल १ घना २ वयवा ३ स्थि ४ त्वक् ५ रोम ६ स्मृति ७ समुद्भवाः क्रमशः ॥ मासेषु शुक्रकुजजीवसूर्यचन्द्रार्किसौम्यानाम् ॥ ५ ॥**

सं०टी०— आधानमासादारभ्य माससप्तकाधिपतीन् ग्रहानाह । गर्भः प्रथमे मासे कललरूपो भवति शुक्रशोणितमिश्रीभूतः तत्र गर्भस्य प्रथमे मासे शुक्रोऽधिपतिः द्वितीये शुक्रशोणितस्य घनत्वं भवति तत्र कुजोऽधिपतिः तृतीये मासे गर्भस्य हस्ताद्यवयवोत्पत्तिः भवति तत्र जीवोऽधिपतिः चतुर्थे मासि गर्भस्यास्थिसम्भवो भवति तत्राऽर्कोऽधिपतिः । पञ्चमे मासि त्वक्चर्मसम्भवो भवति तत्राऽधिपतिश्चन्द्रः । षष्ठे रोमाणि जायन्ते तत्र शनिरधिपतिः । सप्तमे स्मृतिसमुद्भवश्चैतन्यं भवति तत्र बुधोऽधिपतिः ॥ ५ ॥

भाषार्थः— अब गर्भाधानसे जन्मतक सम्पूर्ण महीनोंके स्वामी कहतेहैं.–तहां प्रथम मासमें कलल कहिये वीर्य और रक्तका संयोग होकर स्थिर होताहै. उसका शुक्र स्वामी है, दूसरे मासमें घन अर्थात् वीर्य

और रुधिर पिंडाकार होता है, उसका स्वामी मंगल है, तीसरे म
गर्भस्थके हाथ पांव आदि अंग होतेहैं उसका स्वामी बृहस्पति है, च
मासमें गर्भस्थ बालकके अस्थि कहिये हड्डी होती हैं उसका स्व
सूर्य है, पाचवें मासमें त्वचा ( खाल ) ( चर्म ) उत्पन्न होताहै
चंद्रमा स्वामी है, षष्ठम मासमें रोम उत्पन्न होतेहैं तहां शनैश्चर स्व
है; सातवें मास स्मृति कहिये चैतन्यता तथा पूर्वजन्मोंकी याद हो
तहां बुध स्वामी है ॥ ५ ॥

**अशनोद्वेगप्रसवा परतो लग्नेशचन्द्रसूर्याणाम् ॥**
**कलुषैः पीडापतनं निपीडितैर्निर्मलैः पुष्टिः॥६॥**

सं० टी०– अतः क्रमेण मासत्रये गर्भस्य लक्षणं मासाधिपतिं
मासाधिपतिप्रयोजनमाह । तत्राष्टमे मासि गर्भो मातुर्भुक्तमश्नाति त
तस्याधानलग्नस्य अधिपतिः स्वामी । नवमे मासि तस्य गर्भस्योद्वे
भवति तत्रचन्द्रोऽधिपतिः । दशमे मासि प्रसवो भवति तत्राऽर्कः स्वा
प्रयोजनं चाह कलुषैरिति । आधानकाले यः कलुषो विवर्णस्तस्यस
न्धिनि मासि गर्भस्य पीडा वक्तव्या । निपीडितैरिति । ग्रहेणाक्रा
ग्रहयुद्धे विजिते शिखिशिखाध्वस्ते उल्काहते वा ग्रहे तस्मिन्मासि
गर्भपतनं वक्तव्यं । निर्मलैः रश्मिसंयुक्तैर्गर्भस्य पुष्टिर्वक्तव्या ॥६

भाषार्थः— आठवें मासमें गर्भस्थ बालक अपनी माताके भोजन
द्वारा अहार पाता है तहां गर्भाधानलग्नेश उस मासका स्वामी जानना
और नवम मासमें गर्भस्थ बालक उद्वेग कहिये अनेक जन्मोंकी स्मृति
करके घबड़ाता है. उसका स्वामी चन्द्रमा है, दशम मासमें जन्मता है
उसके सूर्य स्वामी हैं. पूर्वोक्त मासोंके स्वामी जो कहे हैं उनका प्रयोजन
यह है कि जिस मासका स्वामी पापग्रह हो, हीन बली हो, अथवा
उल्कासे पीडित हो उस महीनेमें गर्भपात कहना तथा जिस मासका
स्वामी शुभग्रह हो बली हो उस मासमें गर्भ पुष्ट कहना ॥ ६ ॥

### गर्भसम्भवासम्भवज्ञानम् ।

**बलयुक्तौ स्वगृहांशेष्वर्कसितावुपचयर्क्षगौ**
**पुंसाम् ॥ स्त्रीणां वा कुजचन्द्रौ यदा तदा**
**गर्भसम्भवो भवति ॥ ७ ॥**

सं० टी०— गर्भसम्भवासम्भवज्ञानमाह । यत्र कुत्र राशौ स्वरा-त्र्यंशकस्थावादित्यशुक्रौ बलयुक्तौ पुरुषस्य जन्मलग्नाज्जन्मराशेर्वा उपचयस्थाने भवतो यदा तदा गर्भस्य सम्भवो वक्तव्यः । अङ्गारक-चन्द्रौ स्वराशिनवांशस्थौ भवतः स्त्रियश्चोपचयर्क्षगौ भवतो यदा तदाऽपि गर्भसम्भवो भवति ॥ ७ ॥

भाषार्थः— अब गर्भोत्पत्तिज्ञान कहतेहैं—गर्भाधानसमय पुरुषके जन्मलग्नसे सूर्य शुक्र यह दोनों ग्रह उपचय कहिये ३।६।१०।११ इन स्थानोंमें अपनी राशि वा अपने नवांशामें बलयुक्त स्थित हों तो गर्भकी स्थिति और उत्पत्ति कहना, अथवा जो स्त्रीके जन्मलग्नसे मंगल और चन्द्रमा अपनी राशिमें स्थित हों अथवा अपने नवांशामें स्थित हों और उपचय ( ३।६।१०।११ ) इन स्थानोंमें बलयुक्त स्थित हों तो गर्भोत्पत्ति कहना ॥ ७ ॥

### गर्भसम्भवयोगनिष्फलम् ।

## लग्ने बलिनि गुरौ वा नवपञ्चमसंस्थितेऽपि वा भवति ॥ योगा हतबीजानामफला वीणेव बधिराणाम् ॥ ८ ॥

सं० टी०— गर्भसम्भवयोगनिष्फलत्वं चाह । अथवा लग्नपञ्चम नवमानामेकस्मिन् स्थाने बलवान् बृहस्पतिर्भवति तदा गर्भसम्भवो वाच्यः अथवा जीवे बलयुक्ते आधानलग्नस्थे आधानलग्नान्नवपञ्चम-स्थे वा गर्भसम्भवो भवति । अथवाऽऽदित्यचन्द्रशुक्राङ्गारकाः सर्वे एव यदि स्वभागगाः स्त्रीपुंसोश्चोपचयस्था भवन्ति तदाऽपि गर्भस-म्भवो भवति । यदुक्तं च वराहेन । रवीन्दुशुक्रावनिजैरिति । योगा हतबीजानां मध्ये स्त्रीपुंसोः अन्यतमो हतबीजो भवति तस्मिन् हत-बीजे इमे योगा निष्फला ज्ञेयाः। किमिवेत्याह । यथा वीणा बधिराणां वाद्यमाना श्रुतिसुखं न जनयति तथैतेऽपि योगाः । षण्ढानां संयोग-गानामपि सम्भवं न कुर्वन्ति ॥ ८ ॥

भाषार्थः— गर्भोत्पत्तियोगमें निष्फलत्व वर्णन करते हैं—कि बृहस्प-ति आधानलग्नमें वा नवम पंचमस्थानमें बलसहित स्थित होवे तो गर्भोत्पत्ति कहना. अथवा पूर्वोक्त सूर्य, चंद्र, मंगल अपने राशिनवांशामें

बलयुक्त होके उपचय स्थानोंमें स्थित होनेसे गर्भोत्पत्तियोग कहना. ? कोई ग्रह हतवीर्य कहिये निर्बल हो तो पूर्वोक्त शुभ योग होतेभी निष्फल हो अर्थात् गर्भ नहीं रहै, जैसे बधिरोंके सामने वीणाका ? तैसे निष्फल कहना ॥ ८ ॥

## गर्भे पुरुषस्त्रीज्ञानम् ।

**विषमर्क्षे विषमांशे संस्थिताश्च गुरुशशाङ्कलग्नार्काः॥ पुञ्जन्मकराः समभेषु योषितां समनवांशगताः ॥ ९ ॥**

सं०टी०– अथ गर्भसम्भवज्ञानान्तरं गर्भज्ञानमाह । विषमर्क्षे षमिथुनादिस्थैर्यथासम्भवं सर्वैरेव बृहस्पतिचन्द्रार्कलग्नैः न केव यावत् प्रदर्शितराशिसबन्धिनवांशकगतैः गर्भे पुरुषसम्भवो वक्तव्यः समभेष्विति । एते बृहस्पतिचन्द्रलग्नार्का यदि समराशिषु वृषा स्थिताः तदा स्त्रीजन्म कथनीयं । न केवलं यावत्तत्सम्बन्धिनवां कगता यदा भवेयुः तदाऽपि योषितां जन्मकरा भवन्ति । अथ यथा भिहिता उभयविकल्पे यत्रैव बहवः स्थितास्तल्लिङ्गसम्भवनिर्देशः सा च बलाधिकवशात् । उक्तं च बृहज्जातके-"ओजर्क्षे पुरुषांशकेषु बलि भिर्लग्नार्कगुर्विन्दुभिः पुंजन्म प्रवदेत् समांशसहितैर्युग्मेषु तैर्योषितः" ॥ ९

भाषार्थः— अब गर्भमें पुत्र वा कन्याका योग कहते हैं-कि वि मराशि कहिये मे० मि० सिं० तु० ध० कुं० यह राशि लग्नमें हो अथवा इन राशियोंका नवांश लग्नमें हो वा विषमराशि वा विषमराशिके नवांशामें बृहस्पति चन्द्रमा सूर्य हों तो पुत्रका जन्म कहना. और समराशि वृ० कर्क० कं० वृश्चि० मक० मी० यह राशि लग्नमें हो और समराशियोंका नवांश हो, अथवा समराशिनवांशामें बृहस्पति चन्द्रमा, सूर्य, स्थित हों तो कन्याका जन्म कहना ॥ ९ ॥

## यमलसम्भवज्ञानम् ।

**बलिनो विषमेऽर्कगुरू नरं स्त्रियं समगृहे कुजेन्दुसिताः ॥ यमलं द्विशरीरांशेष्विन्दुजदृष्ट्या स्वपक्षसमौ ॥ १० ॥**

सं०टी०- पुनरपि गर्भलिङ्गज्ञानं यमलसम्भवज्ञानं चाह। विषमराशिगतौ यथासम्भवमादित्यबृहस्पती बलयुक्तौ भवतस्तदा नरो गर्भस्थो वाच्यः। समराशिष्वेव यथासम्भवं सर्वे एव कुजचन्द्रशुक्रा यदा भवन्ति तदा स्त्रीगर्भश्चेति वक्तव्यम्। यमलं द्विशरीरांशेष्विति-द्विशरीरराशिनवांशकस्थाः आदित्यगुरुकुजेन्दुसिताः बुधदृष्टाः यमलं स्वपक्षे कुर्वन्ति। एतदुक्तं भवति। चत्वारो द्विस्वभावा मिथुनमीनकन्याधन्विनः। तत्र मिथुनधन्विनौ पुरुषांशकौ कन्यामीनौ स्त्र्यंशकौ तेन यथासम्भवं मिथुनधन्वंशगतावादित्यगुरू यदि बुधेन यत्र तत्रावस्थितेन दृश्येते तदा यमलौ द्वौ पुरुषौ वाच्यौ एवं यथासम्भवं कन्यामीनांशगताः कुजेन्दुसिताः यत्र तत्रावस्थित्येन बुधेन दृश्यन्ते तदा यमले द्वे कन्ये वाच्ये। अथ दर्शितग्रहपञ्चकमपि द्विःस्वभावराशिसंस्थं यथा तथा बुधः पश्यति तदा एकः पुरुषो वक्तव्यः एका च कन्या वक्तव्या ॥ १० ॥

भाषार्थः— फिरभी पुत्र वा कन्योत्पत्तियोग तथा यमलयोग कहते हैं-सूर्य बृहस्पति बलवान् होकर विषमराशिमें स्थित हों तो पुत्रोत्पत्ति कहना, और मंगल, चन्द्रमा, शुक्र बली होंके सम राशियोंमें स्थित हों तो कन्याका जन्म कहना, अथवा सूर्य, बृहस्पति, मंगल, चन्द्रमा, शुक्र यह ग्रह द्विःस्वभावराशि कहिये मि० कं० ध० मी० इन राशियोंके राशिनवांशामें स्थित हों और बुधकी दृष्टि हो तो यमल कहिये दो बालक उत्पन्न होनेका योग कहना. तथा अपने पक्षसम कहिये द्विःस्वभावराशियोंमें मिथुन और धन पुरुष राशि हैं उनमें सू० बृ० मं० चं० शु० यह ग्रह हों अथवा इनके नवांशामें हों तो गर्भमें पुत्र दो कहना, और समसंज्ञक कन्या, मीन, द्विस्वभावके राशिनवांशामें पूर्वोक्त ग्रह हों तो दो कन्या गर्भमें कहना और जो पूर्वोक्त ग्रहोंमेंसे विषम सम दोनों राशिनवांशामें ग्रह होवें तो एक पुत्र एक कन्या गर्भमें कहना ऐसा स्वबुद्ध्यनुसार विचार कर कहना ॥ १० ॥

अन्यच्च।

लग्नाद्विषमोपगतः शनैश्चरः पुत्रजन्मदो भवति ॥ निगदितयोगबलाबलमवलोक्य विनिश्चयो वाच्यः॥११॥ इति श्रीवरा०मि० ल० पञ्चमोऽध्यायः ॥ ५ ॥

सं०टी०– पुंजन्मयोगान्तरं स्त्रीपुरुषयोगयोर्द्वयोरपि सम्भवे निश्चयो वाच्य इत्याह । लग्नमुक्त्वा विषमर्क्षगः सौरो लग्नात् तृतीयपञ्चमसप्तमनवमैकादशस्थानानामन्यतमस्थानस्थो यदा भवति तदा पुत्रजन्मदो भवति । एतान्योगान्दृष्ट्वा जन्मसमये प्रश्नकाले वा नरोत्पत्तिर्विज्ञेया । निगदितेत्यादि–यत्र पुरुषयोगसम्भवः स्त्रीजन्मसम्भवश्च यो योगो बलवद्ग्रहाभिनिवृत्तस्तद्वशादेकतमस्य सम्भवो वक्तव्यः॥११॥ इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां आधानाध्यायः पञ्चमः ॥

भाषार्थः— गर्भमें पुत्र कन्या जाननेके लिये अन्य योग कहते हैं प्रश्नलग्न वा गर्भाधानलग्नसे विषम जो है तीसरा, पाचवां, सातवां, नवां ग्यारहवां, स्थान इन स्थानोंमेंसे किसी एक स्थानमें शनैश्चर हो तो पुत्रजन्म कहना, तथा पूर्व जो पुत्र वा कन्या उत्पत्ति होवेगी ऐसा योग आयेहैं इसमें बलाबल देखकर निश्चयपूर्वक कहना चाहिये. जहां पुत्रोत्पत्तियोग और कन्योत्पत्तियोग यह दोनों योग हों तो उसमें जो योग बलिष्ठ हो वही निश्चय जानना ॥ ११ ॥

इति श्रीमत्पण्डितनारायणप्रसादविरचितायां लघुजातकभाषाटीकायां आधानाऽध्यायः पञ्चमः ॥ ५ ॥

## अथ सूतिकाऽध्यायः ॥ ६ ॥

### तत्रादौ जातस्य सत्वगुणादिज्ञानं मूर्तिज्ञानं च ।

**सत्वं रजस्तमो वा त्रिंशांशे यस्य भास्करस्तादृक् ॥ बलिनः सदृशी मूर्तिर्बुध्वा वा जातिकुलदेशान् ॥ १ ॥**

सं०टी०– अथ सूतिकाध्यायं व्याख्यास्यामस्तत्रादावेव जातस्य सात्विकराजसतामसत्वनिरूपणाय शरीराकारज्ञानमाह । यस्य जन्मकाले भास्कर आदित्यः सात्विकात्रिंशांशे व्यवस्थितः तदा सात्विको जातः इति वक्तव्यम् । एवं राजसादौ। बलिनः सदृशी मूर्तिरिति-पुरुषस्य जन्मसमये यो ग्रहोऽतिबलवांस्तस्य सदृशी "चतुरस्रो नात्युच्चः" इत्यादिसमदर्शितमिति तस्य यथाविधमेव वक्तव्यं । अथवा लग्ननवांशस्वाधिपतेस्तुल्या मूर्तिर्वक्तव्या । उक्तं च "लग्ननवांशसमानतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वेति" बुध्वा वा जातिकुलदेशानिति-पूर्वं मूर्तिनिर्देश

श्वपाकशबरनिषादाः ज्ञातित एव कृष्णा भवन्ति । तेषामेव निर्देशः । कस्मिन्कुले कोऽसौ जातो गौराणां कृष्णानां वा देशं च बुध्वा मूर्तिनिर्देशः । कस्मिन्देशे कोऽयंजात इति यथा कर्णाटकाः सर्वे एव कृष्णा भवन्ति । वैदेहाः सर्वे एव श्यामाः । काश्मीराः सर्वे गौरा एव ॥ १ ॥

भाषार्थः— अब मूतिकाध्याय वर्णन करते हैं-तहां प्रथम जातकका सत रज तम इनमेंसे गुण और स्वरूपज्ञानं कहतेहैं.-कि जो सात्विक ग्रहके त्रिंशांशमें सूर्य स्थित हो तो वह जातक सतोगुणी कहना. सतोगुणका लक्षण यह है कि दयालु, सत्यवादी, देवता, तथा ब्राह्मणोंमें भक्ति और सरल स्वभाव होवे, सू० चं० बृ० यह तीन ग्रह सतोगुणी हैं, और जो राजस ग्रह बु० शु० के त्रिंशांशमें सूर्य स्थित हो तो जातक राजसप्रकृतिका अर्थात् काव्य, कला, गीत, नाच, स्त्री आदिमें जिसका चित्त रहे और सामान्यस्वभाव होवे और जो सूर्य तामसग्रह मं० श० के त्रिंशांशमें स्थित हो तो वह जातक तमोगुणी कहिये क्रोधी, आलसी, वंचक, व्यर्थवादी, दुष्कर्मी ऐसा होवै, तथा जन्मसमयमें जो ग्रह बलवान् हो उसके अनुकूल स्वरूप कहना, अथवा जाति कुल देशके विचारसे स्वरूप कहना. जैसे निषादजाति कृष्णवर्ण उत्पन्न होते आये हैं उसके मुताबिकभी कहना तथा देशभेदसे जैसे काश्मीरमें प्रायः गोरे मनुष्य होते हैं और कर्णाटकदेश तथा वैदेहदेशमें प्रायः काले मनुष्य होतेहैं ऐसा अपनी बुद्धिसेभी विचारकर कहना ॥ १ ॥

### ग्रहाणां सत्वादिगुणः ।

**गुरुशशिरवयः सत्वं रजः सितज्ञौ तमोऽर्कसुतभौमौ ॥ एतेऽन्तरात्मनः स्वां प्रकृतिं जन्तोः प्रयच्छन्ति ॥ २ ॥**

सं०टी०— ग्रहाणां सात्विकादिविभागमाह । बृहस्पतिचन्द्रादित्याः सात्विकाः बुधशुक्रौ राजसौ शनैश्चराङ्गारकौ तामसौ एते ग्रहाः जन्तोः स्वामात्मीयां प्रकृतिं प्रयच्छन्ति । पूर्वोक्तविधिना त्रिंशांशे भास्करः तादृक् इति । ननु चन्द्रार्कयोः सात्विकत्वेन किं प्रयोजनमुच्यते तयोर्गुणमात्रमेव ॥ २ ॥

भाषार्थः— अब ग्रहोंका सत्वादि गुण कहते हैं-कि बृहस्पति चन्द्रमा, सूर्य यह सतोगुणवाले ग्रह हैं, और शुक्र बुध राजस हैं शनैश्चर मंगल तमोगुणी हैं. पूर्वश्लोकोक्त सूर्य जिसके त्रिंशांशमें उसीके अनुकूल जंतुओंकी प्रकृतिको करते हैं ॥ २ ॥

पूर्वविलग्ने याहक् नव भागास्ताहशी भवति मूर्तिः ॥ यो वा ग्रहो बलिष्ठस्तत्काले ताहशी वाच्या ॥ ३ ॥

सं०टी०— स्पष्टार्थः ॥ ३ ॥

भाषार्थः— लग्नमें पूर्व जैसा नवांश हो वैसाही स्वरूप कहना. वा जो ग्रह उस समयमें बलिष्ठ होवे उसीके अनुकूल प्रकृति कहिये ॥ ३ ॥

जातस्य पितुः परोक्षेऽपरोक्षे वा जन्मज्ञानम् ।

चन्द्रे लग्नमपश्यति मध्ये वा शुक्रसौम्ययोश्चन्द्रे॥ जन्म परोक्षस्य पितुर्यमोदये वा कुजे वाऽस्ते॥४॥

सं०टी०-- ज्ञातस्य पितुः सन्निधानमसन्निधानं चाह । यस्य जन्मलग्नं चन्द्रो न पश्यति तस्य पितुः परोक्षे जन्म वक्तव्यं शुक्रसौम्ययोर्मध्यगते चन्द्रे सति पितुः परोक्षे जन्म वक्तव्यम् यस्य जन्मलग्नस्थः शनैश्चरो भवति तस्य पितुः परोक्षे जन्म वक्तव्यं यस्य लग्नात् भौमः सप्तमो भवति तस्यापि पितुः परोक्षे जन्म वक्तव्यम्॥४॥

भाषार्थः—अब बालकका जन्म पिताके सामने अर्थात् गृहमें होतसंते अथवा पिता परदेशमें था तब हुआ सो कहते हैं-कि चन्द्रमा जन्मलग्नको नहीं देखता होय वा बुधशुक्रके बीचमें चन्द्रमा हो अथवा शनैश्चर लग्नमें हो, यद्वा मंगल सप्तम स्थानमें हो तो बालकका जन्म पिताके पीछे अर्थात् पिताके परदेशमें होनेपर कहना ॥ ४ ॥

परजातस्य ज्ञानम् ।

पापयुतोऽर्कः सेन्दुः पश्यति होरां न चन्द्रमपि जीवः॥ पश्यति सार्कं नेन्दुं यदि जीवो वा परैर्जातः ॥ ५ ॥

सं० टी०-- अथ परजातस्य ज्ञानमाह । चन्द्रार्कावेकराशिगतौ तत्र पापग्रहोऽङ्गारकः शनैश्चरो वा भवति तदा परजातो वक्तव्यः। अथवा चन्द्रे लग्ने बृहस्पतिर्नोभयं पश्यति न दृश्यते तदाऽपि परजातो वक्तव्यः । अथवाऽर्कचन्द्रावेकराशिगतौ जीवो न पश्यति तदाऽपि परजातो वक्तव्यः ॥ ५ ॥

भाषार्थः— अब अपने पितासे उत्पन्न हुवा वा अन्यसे सो कहतेहैं-कि सूर्य जो चंद्रमा और पापग्रहयुक्त हो तो बालक अन्यसे उत्पन्न कहना, तथा बृहस्पति लग्नको वा चंद्रमाको नहीं देखता होवे तोभी दूसरेसे उत्पन्न कहना; अथवा सूर्ययुक्त चन्द्रमाको बृहस्पति नहीं देखता हो तोभी दूसरेसे बालककी उत्पत्ति कहना ॥ ५ ॥

सूतिकागृहज्ञानं दीपज्ञानं च ।

**द्वारं वास्तुनि केन्द्रोपगाद्ग्रहादसति वा विलग्नर्क्षात् ॥ दीपोऽर्कादुदयाद्वर्तिरिन्दुतः स्नेहनिर्देशः ॥ ६ ॥**

सं०टी—सूतिकागृहज्ञानं दीपज्ञानं चाह ।"प्राच्यादीशाः" इत्यादिना या दिक् यस्य ग्रहस्योक्ता तस्मिन् ग्रहे केन्द्रोपगते तद्दिगभिमुखद्वारं सूतिकागृहं वक्तव्यं बहुषु केन्द्रगतेषु यो बलवान्तद्दिगभिमुखं वाच्यम् अन्ये लग्नद्वादशांशराशिदिगभिमुखं वर्णयन्ति । अन्ये तदधिपदिगभिमुखं कथयन्ति । असति वा विलग्नर्क्षादिति । शून्येषु केन्द्रेषु लग्नराशेर्यादिगभिहिता तद्दिगभिमुखं द्वारं सूतिकागृहं वक्तव्यम् । दीपोऽर्कादिति । चरराशिव्यवस्थितेऽर्के संचार्यमाणो दीप आदेश्यः । स्थिरराशिस्थेऽर्के एकदेशस्थः द्विस्वभावराशिस्थे चालितः स्थापितश्चेति।उदयाद्वर्तिः आदेश्या।लग्नारम्भक्षणे क्षिप्तैका वर्तिः। लग्नावसाने सर्वा दग्धा । अन्तरालेऽनुपातिनवर्तिदग्धप्रमाणं वक्तव्यं इन्दुतः स्नेहनिर्देश इति । यत्र राशौ चन्द्रमा व्यवस्थितः तत्र यदि प्रारम्भ एव स्थितो भवति तदा स्नेहभाजनं पूर्णं वक्तव्यम् । यद्यन्तिमभागे तदा दीपभाजनं स्नेहान्तं वक्तव्यं मध्येऽर्धं अन्यत्रानुपातः ॥ ६ ॥

भाषार्थः— अब सूतिकाके गृहका द्वार किस मुख है और उस समय दीपक कहां स्थित है सो कहते हैं--कि जन्मसमय जन्मलग्नसे

केंद्रमें जो ग्रह बलवान् होंय उसी मुखका सूतिकागृह कहना. जन्मलग्न पूर्व दिशा, सप्तमस्थान पश्चिम दिशा, चतुर्थ स्थान उत्तर दिशा, दशम स्थान दक्षिण दिशा जानना, जो इन केन्द्रोंमें बहुत ग्रह बलवान् होंय अधिक बली ग्रह जिस केंन्द्रमें हो वही द्वार सूतिकाका जानना, और जो केन्द्रमें कोई ग्रह न हो तो जिस लग्नमें जन्म हो वह लग्न जिस जिस दिशाका हो उस दिशाका सूतिकाद्वार कहना. तथा सूर्यसे दीपकका ज्ञान कहिये:—जैसे चरराशिमें सूर्य स्थित हो तो जन्मसमय दीपक हाथमें लियारहा कहना, और स्थिरराशिमें सूर्य हो तो दीपक स्थिर कहना, द्विस्वभाव राशिमें सूर्य स्थित हो तो दीपक एकस्थानसे उठाकर दूसरे स्थान रक्खागया ऐसा कहना. तथा लग्नसे वर्तिज्ञान कहिये:—अर्थात् जिस लग्नमें जन्म हो तिसका प्रारंभ हो तो दीपकमें बत्ती तुरंत डाली कहना तथा जो आधी लग्न व्यतीत होगई हो तो आधी जली बत्ती कहना और जो लग्न समाप्तपर हो तो दीपकमें बत्ती थोड़ीही रही कहना. एवं चन्द्रमासे स्नेह कहिये तैलका ज्ञान करना. जो चन्द्रमाकी राशिका प्रारंभही हो तो तैलसे दीपक भराभया कहना, आधी हो तौ आधा तैल कहना, अंत हो तो तैल बहुत कम कहना. एवं अनुपात करके कहना ॥ ६ ॥

## सूतिकागृहस्वरूपम् ।

**अदृढं नवमथ दग्धं चित्रं सुदृढं मनोरमं जीर्णम् ॥ गृहमर्काद्यैर्वीर्यात् प्रतिवेश्म सन्निकृष्टैश्च ॥ ७ ॥**

सं०टी०— सूतिकागृहस्वरूपज्ञानमाह । अर्काद्यैर्ग्रहैर्वीर्याद्बलाधिक्यात्सूतिकागृहं वाच्यम् । तत्र सर्वग्रहेभ्योऽर्के बलवति सति सूतिकागृहमदृढं वाच्यम् । चन्द्रे बलवति नवं भौमे दग्धं बुधे चित्रं बृहस्पतावत्यन्तदृढं शुक्रे मनोरमं शनैश्चरे जीर्णं। प्रतिवेश्म सन्निकृष्टैश्चेति। सन्निकृष्टैः प्रतिवेश्म वक्तव्यम् । गृहदानृगृहस्य पुरतः पश्चाद्वा ये ग्रहाःस्थितास्तेनैव क्रमेण सूतिकागृहात्प्रतिवेश्म गृहाणि वाच्यानि ॥७॥

भाषार्थः— अब सूतिकागृह किसप्रकारका है सो कहतेहैं—सूर्यादि ग्रहोंमेंसे जो ग्रह अधिक बली हो तिसकरके सूतिकागृहका स्वरूप कहना,

तहां जो सबमें सूर्य अधिक बली हो तो सूतिकागृह अदृढ़ ( पुष्ट नहीं ) ऐसा कहना, चन्द्रमा अधिक बली हो तो नवीन, मंगल बली हो तो दग्ध ( जराभया ) कहिये, बुध बली हो तो चित्र ( रंगबिरंग ) वाला कहना, बृहस्पति बली हो तो सुदृढ ( अत्यन्त पुष्ट ) कहना, शुक्र बली हो तो मनोरम ( दर्शनीय ) अर्थात् मनका हरनेवाला सुंदर बना भया कहना, शनि बली हो तो जीर्ण कहिये बहुत दिनोंका बनाभया ऐसा कहना. तथा जिस बली ग्रहसे सूतीगृहका जो स्वरूप कहा है उस ग्रहसे चारों ओर जो ग्रह जैसे पड़े हों उनसे निकटवर्ती घरोंका स्वरूप कहना ॥ ७ ॥

## गृहभूमिकाशालाज्ञानम् ।

**गुरुरुच्चो दशमस्थो द्वित्रिचतुर्भूमिकं करोति गृहम् ॥ धनुषि सबले विशालं द्विशालमन्येषु यमलेषु ॥ ८ ॥**

सं० टी०— गृहभूमिकाशालाज्ञानमाह । बृहस्पतिरुच्चस्थो लग्नाद्यदि दशमस्थाने भवति तदा द्वित्रिचतुर्भूमिकं-गृहं वक्तव्यं । कथमुच्यते यदा यदा परमोच्चभागान् पञ्चातिक्रम्य स्थितो भवति तदा द्विभूमिकं करोति गृहं । यदा भागः पञ्चमादर्वाक् भवति तदा त्रिभूमिकं करोति । यदा पञ्चमभागे भवति तदा चतुर्भूमिकं करोति । धनुषीत्यादि-धनुर्धरस्थे जीवे बलोपेते तदा विशालं वक्तव्यम् । द्विशालमन्येषु यमलेषु । यमलर्क्षेषु मिथुनकन्यामीनेष्ववस्थिते जीवे बलोपेते द्विशालं गृहं वक्तव्यम् ॥ ८ ॥

भाषार्थः— सूतिकाका घर एक खंडका है या दो खंडका है सो कहतेहैं—उच्चराशि ( कर्क )का बृहस्पति दशमस्थानमें हो और दूसरे नवांशामें हो तो दो खंडका, तीसरे चौथे अंशका हो तो तीन खंडका मकान कहना, पाचवें अंशमें हो तो चौमंजिला घर कहना, जो बृहस्पति धनुराशिका हो और बली हो तो दो खंडका सुंदर गृह कहना, ऐसा ही द्विःस्वभावराशिमें स्थित बलयुक्त बृहस्पतिका फल कहना ॥ ८ ॥

## सूतिकाखट्वाङ्गज्ञानम् ।

**षट्त्रिनवान्त्याः पादाः खट्वाङ्गान्यन्तरालभवनानि ॥ विनतत्वं यमलर्क्षैः क्रूरैस्तत्तुल्यमुपघातः ॥ ९ ॥**

सं॰ टी॰— खट्वाङ्गस्वरूपज्ञानमाह । लग्नात्षट्तृतीयनवमद्वादशराशयः खट्वायाः पादा वक्तव्याः । एतदुक्तं भवति येन लग्नेन प्रसवस्तदुक्तायां दिशि शय्यायाः शिरः । लग्नात् द्वादशतृतीयौ पूर्वपादौ । तत्रापि तृतीयो दक्षिणः द्वादशो वामः । षट्नवमो पश्चिमौ तत्रापि षष्ठो दक्षिणः नवमो वामः । खट्वाङ्गान्यन्तरालभवनानि । लग्नं द्वितीयं शीर्षे चतुर्थं पञ्चमं दक्षिणाङ्गे सप्ताष्टौ पादभागे दशमैकादशौ वामाङ्गे । अस्य प्रयोजनं विनतत्वमित्यादि । यस्मिन् खट्वाङ्गे यमले द्विस्वभावराशिर्भवति तस्मिन् भागे विनतत्वं नम्रत्वं वाच्यम् । यस्मिन् खण्ट्वाङ्गे क्रूरग्रहो भवति तस्मिन्नङ्गे ग्रहतुल्य उपघातो वक्तव्यः । यत्रार्को भवति तदङ्गमदृढं यत्रभौमस्तद्दग्धं यत्र शनैश्चरस्तज्जीर्णमिति । अत्रापि यमलर्क्षे सौम्यग्रहः स्वामियुक्तोऽप्यविनतत्त्वं पापग्रहोऽपि स्वोच्चत्रिकोणस्थो मित्रगृहस्थो नोपघातः ॥ ९ ॥

भाषार्थः—अब सूतिकाके खट्वाका ज्ञान कहतेहैं—जन्मलग्नसे ६ । ३ । ९ । १२ इन राशियोंकरके खट्वाके पायोंको कहना, जिस लग्नमें जन्म हो वह लग्नराशि जिस दिशाकी हो उसी दिशामें शिराहना कहना. जैसे मेष, वृषभ, पूर्व दिशामें मिथुन अग्निकोणमें, कर्क सिंह दक्षिणमें, कन्या हो तो नैऋत्यकोणमें, तुला वृश्चिक पश्चिममें, धन वायव्यमें, मकर कुंभ उत्तरमें, मीन ईशानमें, अनुपात करनेसे खट्वाका सब अंग जानना, और द्विस्वभावराशि जहाँपर हो वहाँ वह अंग खट्वाका ऊँचा नीचा कहना, और जहाँ पापग्रह पड़ा हो वह अंग खट्वाका भंग ( टूटा ) कहना और जो पापग्रह बली हों तो नहीं भंग कहना यह खट्वाका विभाग कहा ॥९॥

## नालवेष्टितादिज्ञानम् ।

**छागसिंहवृषैर्लग्ने तत्स्थे सौरावथो कुजे ॥ राश्यंशसदृशे गात्रे जायते नालवेष्टितः ॥ १० ॥**

सं० टी०— स्पष्टार्थः ॥ १० ॥

भाषार्थः— अब नालवेष्टितज्ञान कहतेहैं-छाग ( मेष ), सिंह, वृषभ लग्नमें जन्म हो शनि लग्नमें हो अथवा मंगल हो तो वह बालक नालसे वेष्टित कहना, तहां लग्नमें जो नवांशा हो उसी राशिके सदृश पुरुषांगमें जिस अंगपर हो उसी अंगमें वेष्टित ( लिपटाभया ) कहना. ॥ १० ॥

## सूतिकागृहे द्रव्यज्ञानम् ।

**अर्कादिताम्र १ मणि २ हेम ३ शुक्ति ४ रौप्याणि ५ मौक्तिकं ६ लोहं ७ ॥ वक्तव्यं बलवद्भिः स्वस्थाने हेम जीवेऽपि ॥ ११ ॥**

सं०टी०—सूतिकागृहे द्रव्यज्ञानार्थमाह । सर्वग्रहेभ्योऽर्के बलवति सूतिकागृहे ताम्रं वक्तव्यं चंद्रे बलवति मणयः भौमे सुवर्णं बुधे शुक्तिरितिकांस्यादि । बृहस्पतौ रौप्यं शुक्रे मुक्ताफलानि शनैश्चरे लोहं स्वस्थाने हेम जीवेऽपि इति । धनुर्धरमीनयोरन्यतरराशिव्यवस्थिते जीवे सर्वग्रहेभ्यो बलवति रौप्यं न वक्तव्यम् सुवर्णं वक्तव्यमिति ॥ ११ ॥

भाषार्थः—अब सूतिकाके गृहमें द्रव्यज्ञान कहतेहैं-सूर्यादि ग्रहोंमें जो अधिक बली हो उसीके अनुकूल ताम्रादि द्रव्य कहना. जैसे सूर्य अधिक बली हो तो सूतिकाके घरमें तांबा कहना, चन्द्रमा बली हो तो मणि कहना, मंगल बली हो तो सुवर्ण कहना, बुध बली हो तो सीप कांस्यादि कहना, बृहस्पति हो तो चांदी कहना, शुक्र हो तो मोती कहना, शनि बली हो तो लोहा कहना. जो बृहस्पति अपनी राशिमें बली हो तो चांदी नहीं सोना कहना ॥ ११ ॥

## उपसूतिकाज्ञानम् ।

**शशिलग्नान्तरसंस्थग्रहतुल्याः सूतिकाश्च वक्तव्याः ॥ उदगर्धेऽभ्यन्तरगा बाह्याश्चक्रस्य दृश्येऽर्धे ॥ १२ ॥**

**इति श्रीवराहमिहरकृते लघुजातके सूतिकाध्यायः षष्ठः ॥ ६ ॥**

सं० टी०—उपसूतिकाज्ञानमाह । लग्नादारभ्य चन्द्रमा यस्मिन् राशौ व्यवस्थितस्तदन्तेर यावन्तो ग्रहा व्यवस्थितास्तावत्संख्या उपसूतिका वक्तव्याः। वक्ष्यमाणायुर्दायाध्यायात्तासां हि त्रिगुणत्वादि वक्तव्यं वक्ष्यमाणवर्गोत्तमस्वराशिद्रेष्काणनवांशे द्विगुणं वक्रोच्चयोस्त्रिगुणत्वं द्वित्रिगुणत्वे सकृत् त्रिगुणमिति सूतिकानामुपसूतिकानां ग्रहरूपजातिवयोवर्णरूपादयो वक्तव्याः । उदगर्ध इत्यादि-उत्तरदिग्व्यवस्थितमुदगर्धं अदृश्यमित्यर्थः। तस्मिन्नदृश्येऽर्धे लग्नचन्द्रान्तरगतानां मध्ये यावन्तो ग्रहा व्यवस्थितास्तावन्त्य उपसूतिका आगारे एव वक्तव्याः। चन्द्रलग्नान्तरगतानां ग्रहाणां मध्ये यावन्तो ग्रहा दृश्ये चक्रस्यार्द्धे व्यवस्थितास्तावन्त्य उपसूतिकाः सूतिकागाराद्बहिर्वक्तव्याः ॥ १२ ॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां
सूतिकाऽध्यायः षष्ठः ॥ ६ ॥

भाषार्थः—अब सूतिकाके पास कितनी स्त्रियां हैं सो कहतेहैं-कि चंद्रमा और लग्नकें अंतर्गत जितने ग्रह हों उतनीहीं स्त्रियां सूतिकाके निकट कहना, और उन ग्रहोंका जैसा स्वरूप स्वभाव हो वैसाही उन उपसूतिकाओंका भी कहना, और आयुर्दायाध्यायमें कहनेके अनुसार द्विगुण त्रिगुणभी कहना. जो ग्रह उपसूतिका बतलानेवाला हो सो अपनी राशिमें द्रेष्काणमें नवांशामें हो. वह द्विगुण अर्थात् दो उपसूतिकाओंका सूचक जानना, और जो वक्र वा उच्च राशिका हो तो त्रिगुण कहना, और उन ग्रहोंके वर्ण तुल्य वस्त्रोंका रंग कहना, तथा सूतिकासूचक ग्रह जन्मांगचक्रके उदगर्धमें अर्थात् लग्नसे सप्तमस्थानतक इस बीच जितने ग्रह चक्रके दृश्यर्द्ध कहिये अष्टमसे बारहवें स्थानतक इसके मध्यमें हों उतनी उपसूतिका सूतिकागृहके बाहर कहना ॥ १२ ॥

॥ इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातक-
भाषाटीकायां सूतिकाऽध्यायः षष्ठः ॥ ६ ॥

## अथारिष्टाध्यायः ॥ ७ ॥

### तत्रादौ चन्द्रात् अरिष्टज्ञानम् ।

षष्ठाष्टमेऽपि चन्द्रः सद्योमरणाय पापसंदृष्टः ॥ अष्टाभिः शुभदृष्टो वर्षैर्मिश्रैस्तदर्धेन ॥ १ ॥

सं० टी०—अथारिष्टाध्यायं व्याख्यास्यामः ॥ तत्रारिष्टयोगमाह। यस्य जन्मलग्नात् षष्ठस्थाने यदि चन्द्रमा भवति अथवाऽष्टमे सौम्यग्रहैरदृश्यमानः पापग्रहैर्दृश्यते तदा जातस्य सद्योमरणं वक्तव्यम् । अथवा षष्ठाष्टमे चन्द्रमाः पापग्रहेण न दृश्यते सौम्येन दृश्यते तदा जातस्य वर्षाष्टमे मरणं वक्तव्यं अथवा षष्ठाष्टमे चन्द्रमाः सौम्येन दृश्यते पापेन च दृश्यते तदा जातस्य वर्षचतुष्टयेन मरणं वक्तव्यम् । अथ षष्ठाष्टमगश्चन्द्रमाः न कश्चिद्दृश्येत तदा योगएव न भवति ॥१॥

भाषार्थः—अब अरिष्टाध्याय कहतेहैं—नहां प्रथम चंद्रमासे अरिष्टता कहतेहैं । कि जन्मलग्नसे छठे आठवें स्थानमें चंद्रमा हो और पापग्रहोंकी दृष्टि हो तो बालककी सद्यः कहिये शीघ्र मृत्यु कहना, तथा षष्ठाष्टमस्थ चंद्रमापर शुभग्रह पापग्रह दोनों देखते होवें तो तदर्ध (चौथे वर्ष) में मरण कहना ॥ १ ॥

अथारिष्टान्तरम् ।

## शशिवत्सौम्याः पापैर्वक्रिभिरवलोकिता न शुभदृष्टाः ॥ मासेन मरणदाः स्युः पापजितो लग्नपश्चास्ते॥ २ ॥

सं० टी०—अरिष्टान्तरमाह । शशिना तुल्यं शशिवत्सौम्याः एतदुक्तं भवति लग्नात् षष्ठे स्थाने अष्टमेऽपि वा कश्चित् सौम्यग्रहो भवति स च पापग्रहेण वक्रगतेन दृश्यते वक्रग्रहणमशेषबलोपरक्षणार्थं। एवं ज्ञाते बलिना ग्रहेण पापेन दृश्यते न चाप्येकेन सौम्यग्रहेण दृश्यते तदा जातस्य मासेन मरणं वक्तव्यं । पापजितो लग्नपश्चास्त इति-यस्य जन्मलग्नाधिपतिः पापसमागतो पापग्रहगेहे दृश्यते वा जितः स लग्नात् सप्तमे यदि भवति तदा मासेन मरणं वक्तव्यं । जितलक्षणमुच्यन्ते । "दक्षिणदिक्स्थः पुरुषो वेपथुरप्राप्य सन्निवृतो वेणुः अधिरूढो विकृतो निःप्रभो विवर्णश्च यः सजित" इति ॥ २ ॥

भाषार्थः—चंद्रमाके सदृश जन्मलग्नसे छठें आठवें शुभ ग्रह हों और पापग्रह बली होके देखते होवें शुभग्रहकी दृष्टि न हो तो उस बालकका मरण एकमासमें हो, और लग्नका स्वामी पापग्रहके साथ सप्तमस्थानमें हो तो भी एक मासमें मरण कहना ॥ २ ॥

## अरिष्टान्तरम् ।

**राश्यन्तस्थैः पापैः सन्ध्यायां हिममयूखहोरायाम् ॥ मृत्युः प्रत्येकस्थैः केन्द्रेषु शशाङ्कपापैश्च ॥ ३ ॥**

सं०टी०—अरिष्टान्तरमाह । यत्र यत्र राशौ पापग्रहो व्यवस्थितः स नवमे नवांशके स्थितः एवं सर्वे ग्रहाः पापा यदा राश्यन्तस्था भवंति संध्याकालश्च भवति तदा जातस्य मृत्युर्भवति संध्यालक्षणं "अर्धास्तसमयात्संध्या व्यक्तीभूता न तारका॥यावत्तेजःपरिहानिर्मुखाद्भानोरर्धोदयं यावत् " तस्मिन्संध्याकाल इति-प्रत्येकस्थैः केंद्रेषु शशांकपापैश्चेति चतुर्षु केन्द्रेषु यथा तथाऽर्कचंद्रभौमशनैश्चराणामन्यतमो भवति तदा जातस्य मृत्युर्वक्तव्यः ॥ ३ ॥

भाषार्थः—अन्य अरिष्टयोग कहतेहैं-जो पापग्रह राशिके अंतमें अर्थात् नवम नवांशामें हों और संध्याका जन्म हो और जन्मसमय चंद्रमाका होरा हो तो उस बालककी मृत्यु कहना, और पापग्रह चंद्रमा सब केन्द्र अर्थात् चारों केन्द्रमें हों तो भी मरण कहना ॥ ३ ॥

## अरिष्टयोगद्वयम् ।

**चक्रप्राक्पश्चार्द्धे पापशुभैः कीटभोदये मृत्युः ॥ निधनचतुष्टयगै ८ । १ । ४ । ७ १० र्वा क्रूरैः क्षीणे शशिन्युदये ॥ ४ ॥**

सं० टी०—अरिष्टयोगद्वयमाह । यावदेकांशो लग्नस्याऽभ्युदितस्तावत्संख्याकाद्दशमराशेरंशादारभ्य यावच्चतुर्थस्यैव राशेस्तावत्संख्यैर्वांशस्तावच्चक्रस्य पूर्वार्द्धं द्वितीयमपरार्धं ज्ञेयम् । यत्र यदा चक्रस्य पूर्वार्द्धे सर्वे पापा व्यवस्थिता भवंति अपरार्धे च यदा सौम्याः सर्वे व्यवस्थिता भवंति वृश्चिककर्कटयोरन्यतमं च लग्नं भवति तदा जातस्य मृत्युर्भववि । निधनचतुष्टयेत्यादि । अष्टमकेन्द्रगैर्यथा तथा पापैः क्षीणे चंद्रमसि लग्ने सति यस्य जन्म भवति सः म्रियते ॥ ४॥

भाषार्थः—अब दो अरिष्टयोग कहतेहैं-कि जो चक्रके पूर्वार्धमें सब पापग्रह हों उत्तरार्धमें शुभग्रह हों और कर्क वृश्चिक लग्नका जन्म हो तो शीघ्र मृत्यु कहना, चक्रका पूर्वार्ध वह है कि जन्मलग्नके जितने अंश व्यतीत हों उतने अंश जन्मलग्नसे चौथे लग्नको छोड़के अर्थात् जितने अंश चौथे घरके हैं वहांसे लेके दशमस्थानके जितने अंश हों उतने अंश छोड़ चक्रका परार्ध है, और दशमके शेष अंशसे लेके चौथे घरके जितने अंश बीते हैं वहांतक चक्रका पूर्वार्ध है. जैसे मेषके दश अंशपर जन्म है तो कर्कके दश अंश छोड़के शेष कर्कके बीस अंश और सिं. क. तु. वृ. ध. मकरके दस अंशतक चक्रका परार्ध जानना, और मकरके शेष बीस अंश और कुं. मी. मे. वृ. मि. कर्कके दश यह चक्रका पूर्वार्ध जानना, तथा सब क्रूर ग्रह अष्टममें और केन्द्रमें हों और चंद्रमा लग्नमें हो तो भी शीघ्र मरण कहना. यह दूसरा योग है ॥ ४ ॥

अरिष्टान्तरम् ।

सप्ताष्टान्त्योदयगे शशिनि सपापे शुभेक्षणवियुक्ते ॥ न च कण्टकेऽस्ति कश्चिच्छुभस्तदा मृत्युरादेश्यः ॥ ५ ॥

सं०टी०--अरिष्टांतरमाह । सप्ताष्टद्वादशानामेकतमेऽपि स्थाने लग्ने वा चंद्रः पापग्रहयुतो भवति । शुभग्रहेण बुधगुरुशुक्राणामेकतमेनापि न दृश्यते न च युक्तो न च केंद्रेषु शुभग्रहः कश्चिदेवंविधे योगे जातस्य मरणमादेश्यम् ॥ ५ ॥

भाषार्थः—और भी अरिष्टयोग वर्णन करतेहैं-कि जन्मलग्नसे सप्तम, अष्टम और द्वादश तथा लग्नमें चंद्रमा पापग्रहयुक्त होवे और शुभग्रहकी दृष्टि चंद्रमापर न हो और केन्द्रमें शुभग्रह न होय तो मृत्यु कहिये ॥५॥

अन्यच्चारिष्टयोगद्वयम् ।

चतुरस्रे सप्तमगः पापान्तस्थः शशी मरणदाता ॥ उदयगतो वा चन्द्रः सप्तमराशिस्थितैः पापैः ॥ ६ ॥

सं० टी०--अरिष्टयोगद्वयमाह ॥ लग्नाच्चन्द्रमाश्चतुर्थे स्थानेऽष्टमे वा सप्तमे वा स्थितस्तत्र च पापग्रहयोर्मध्यगतस्तदा जातस्य मरणं करोति इत्यर्थः । उदयगतो वेत्यादि । लग्ने चंद्रमा भवति सप्तमस्थाः पापाश्च भवंति तदा जातस्य मृत्युर्वक्तव्यः ॥ ६ ॥

भाषार्थः—अब अन्यभी दो अरिष्टयोग कहतेहैं—जो जन्मलग्नसे चौथे आठवें वा सातवें स्थानमें चंद्रमा पापग्रहोंके अंतर्गत अर्थात् चंद्रमाके दूसरे बारहवें स्थानमें पापग्रह हों तो मृत्यु कहना, अथवा चंद्रमा लग्नमें हो और पापग्रह हों तो भी जातककी मृत्यु कहना ॥ ६ ॥

## अरिष्टान्तरम् ।

क्षीणेन्दौ द्वादशगे लग्नाष्टमराशिसंस्थितैः पापैः ॥ सौम्यरहितैश्च केन्द्रैः सद्योमृत्युर्विनिर्देश्यः ॥ ७ ॥

सं० टी०—अरिष्टान्तरमाह । यस्य जन्मलग्नाद् द्वादशस्थाने क्षीणश्चंद्रो भवति लग्नाष्टमराशौ यदि पापा व्यवस्थिताः सौम्यरहितानि केन्द्राणि भवंति तदा जातस्य सद्योमरणं वक्तव्यम् ॥ ७ ॥

भाषार्थः—अन्यभी अरिष्टयोग कहतेहैं—कि क्षीण चन्द्रमा बारहवें स्थान हो और जन्मलग्नमें वा आठवें घरमें पापग्रह स्थित हों, और शुभग्रह केन्द्रोंमें नहीं होवें तो जातककी शीघ्र मृत्यु कहिये ॥ ७ ॥

## अन्यच्च ।

सोपप्लवे शशाङ्के सक्रूरे लग्नगे कुजेऽष्टमगे ॥ मृत्युर्मात्रा सार्द्धं चन्द्रवदर्के सशस्त्रेण ॥ ८ ॥

सं० टी०—अरिष्टान्तरमाह । ग्रहउपप्लवः चन्द्रग्रहणकाले लग्नगते चंद्रमसि तत्रैव शनैश्चरे पापे व्यवस्थिते लग्नादष्टमगते च भौमे जातः शिशुर्म्रियते मात्रा सहैव । चन्द्रवदर्के । सशस्त्रेणेति चन्द्रेण तुल्यं चन्द्रवत् एतदुक्तं भवति आदित्यग्रहणकाले अर्को लग्नगतो ध-

वति तत्रैव शनैश्वरः पापग्रहः अष्टमो भौमः तदा जातस्य तन्मातुश्च शस्त्रतो मृत्युर्भवति ॥ ८ ॥

भाषार्थः—औरभी अरिष्टयोग कहतेहैं–कि. सोपप्लव कहिये राहुके मुखसे निकलाभया अर्थात् ग्रहणमें चंद्रमा क्रूरग्रहके साथ होके लग्नमें होवे और मंगल आठवें हो तो बालककी मृत्यु मातासमेत कहना. तैसेही चंद्रमाके समान अर्थात् ग्रहणकालमें सूर्य जो लग्नमें पापग्रहयुक्त स्थित हो और मंगल आठवें हो तो बालक मातासहित हथियारसे मृत्यु पावै ऐसा कहना ॥ ८ ॥

अरिष्टान्तरम् ।

लग्नद्वादशनवमनैधनसंस्थितैश्चंद्रसौरिसूर्यारैः॥ जातस्य भवति मरणं यदि न बलयुतः पतिर्वचसाम्॥ ९ ॥

सं० टी०—अरिष्टान्तरमाह । यस्य जन्मनि लग्नगतश्चंद्रमा भवति द्वादशस्थः शनैश्वरः नवमोऽर्कः अष्टमो भौमो भवति जीवश्च बलवान्न भवति तदा जातस्य मरणं भवति ॥ ९ ॥

भाषार्थः—और योग कहतेहैं–कि लग्नमें चंद्रमा, बारहवें शनैश्चर, नवें सूर्य, आठवें मंगल हो तो वर्षके भीतर बालकका मरण होवे यह मुनियोंने कहा है ॥ ९ ॥

अन्यच्च ।

सुतमदननवान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः ॥ भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥ १० ॥

सं० टी०—अरिष्टान्तरमाह । लग्नात्पञ्चमसप्तमनवमद्वादशाष्टमस्थानानामन्यतमस्थानस्थः लग्नस्थो वा चन्द्रो भवति सच पापग्रहयुतो भवति शुक्रबुधबृहस्पतीनामन्यतमेन बलिना न युक्तो न दृश्यते वा तदा जातस्य मरणाय भवति ॥ १० ॥

भाषार्थः—और भी अरिष्टयोग कहतेहैं–कि जन्मलग्नसे ५।७।९।१२

८ इन स्थानोंमें वा लग्नमें पापयुक्त चंद्रमा हो और शुक्र, बुध, बृहस्पति यह शुभग्रह बली होके उस पापग्रहयुक्त चंद्रमाके साथमें न हों वा देखे भी न होवें तो उस बालककी मृत्यु कहना ॥ १० ॥

## अरिष्टकालज्ञानम् ।

योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनुगृहमथवा ॥ पापैर्दृष्टे बलवति मरणं वर्षस्यांतः किल मुनिगदितम् ॥ ११ ॥

इति श्रीवराहमिहरकृते लघुजातके अरिष्टाऽध्यायः सप्तमः ॥ ७ ॥

सं० टी०—अनुक्तमरणकालानामरिष्टानां कालज्ञानमाह । यस्मिन्नरिष्टयोगे जातस्य मरणकालविधिर्नोक्तस्तस्मिन्योगे जातस्य ये रोगकर्तारो ग्रहास्तेषां मध्ये यो बलवान्स यस्मिन् राशौ जन्मकाले व्यवस्थितस्तत्र चारक्रमाच्चन्द्रमसि प्राप्ते जातस्य मरणं वक्तव्यं । स्वं आत्मीयं स्थानं वा गते चन्द्रमसि जातकाले यत्र राशौ चन्द्रमा व्यवस्थितस्तमेव राशिं पुनरपि गते चंद्रमसि तस्य मरणं वक्तव्यम् । तनुगृहं लग्नं तत्र चारक्रमात् गते चन्द्रमसि तस्य मरणं वक्तव्यं । कदेत्युच्यते. वर्षस्यान्तः संवत्सरस्यांतरे । एतदुक्तं भवति अनुक्तमरणकालमारभ्य जातो वर्षन्नातिक्रमतीति तत्र प्रतिमासमेवैतानि चन्द्रमस्थराशितएवावगन्तव्यानि । तद्वर्षाभ्यन्तरे तस्य कदा मरणं वक्तव्यं इत्यत आह । पापैर्दृष्टे बलवति । दर्शितराशित्रये एकस्मिन् राशौ यदा बलवान् चन्द्रो भवति पापैश्च दृष्टो भवति तदा तस्य मरणं वक्तव्यं न केवलं गतमात्रएवचन्द्रे । किल मुनिगदितं किलेत्यागमसूचना । मुनिगदितमरिष्टलक्षणमित्यागमपारंपर्येण श्रूयत इति ॥११॥

इति संक्षेपटीकायामरिष्टाध्यायः सप्तमः ॥ ७ ॥

भावार्थः—अब अरिष्टका समयज्ञान कहतेहैं-कि अरिष्ट करनेवाले ग्रहोंमें जो ग्रह अधिक बली हो वह ग्रह जिस राशिमें हो उस राशिपर घूमताभया चन्द्रमा जिस वर्ष वा महीनामें आवै उसी वर्ष वामहीनामें मृत्यु कहना, अथवा जन्मसमय चन्द्रमा जिस राशिमें हो उस राशिपर भ्रमण करताभया जब जाय तब मरण कहना, यद्वा जहाँ चंद्रमा हो

वहांसे भ्रमण करते करते लग्नमें जब जावै तब मरण कहना, कोई वर्षके अंतर्गत मरण कहतेहैं.- कि जिसका समय नियत नहीं किया है. यह जो पूर्वोक्त चंद्रचारसे मरण कहागया वहां जो पापग्रह चंद्रमाको बली दृष्टिसे देखते होवें तो मरण कहना ॥ ११ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातक-
भाषाटीकायां अरिष्टाऽध्यायः सप्तमः ॥ ७ ॥

## अथारिष्टभङ्गाध्यायो लिख्यते ॥

सर्वानिमानतिबलः स्फुरदंशुजातो लग्न-
स्थितः प्रशमयेत्सुरराजमंत्री ॥ एको बहूनि
दुरितानि सुदुस्तराणि भक्त्या प्रयुक्त इव
शूलधरप्रणामः ॥ १ ॥

सं० टी०-- स्पष्टार्थः ॥ १ ॥

भाषार्थः---अब अरिष्टभंग कहतेहैं- कि जो बृहस्पति सम्पूर्ण ग्रहोंमें अधिक बलवान् होके लग्नमें स्थित हो और उदयी हो तो एकही बृहस्पति बहुत दुस्तर दोषोंको दूर करैहै. जैसे भक्तिपूर्वक शूलधर कहिये महादेवजीको प्रणाम करनेसे समस्त दोष दूर होजातेहैं. तैसेही पूर्वोक्त बृहस्पति दोष दूर करनेमें जानना ॥ १ ॥

लग्नाधिपोऽतिबलवानशुभैरदृष्टः केन्द्रस्थितैः
शुभखगैरवलोक्यमानः॥ मृत्युं विधूय विदधा-
ति सुदीर्घमायुः सार्द्धं गुणैर्बहुभिरूर्जितया
च लक्ष्म्या ॥ २ ॥

सं० टी०-- स्पष्टार्थः ॥ २ ॥

भाषार्थः---जो लग्नका स्वामी अतिबली हो और पापग्रहोंकी दृष्टि न हो और केंद्रमें स्थित शुभग्रह देखते होवें तो मृत्युके देनेवालाभी चंद्रमा बहुत बड़ी आयुको करै और बहुत प्रकारके गुण तथा लक्ष्मीसे युक्त करै ॥ २ ॥

लग्नादष्टमवर्त्यपि गुरुबुधशुक्रद्रेष्काणगश्चंद्रः ॥
मृत्युप्राप्तमपि नरं परिरक्षत्येव निर्व्याजम् ॥ ३ ॥

सं० टी०-- स्पष्टार्थः ॥ ३ ॥

भाषार्थः—जन्मलग्नसे अष्टमस्थानमें चंद्रमा हो और गुरु, बुध व शुक्रके द्रेष्काणमें होवे तो चंद्रमा मृत्युको प्राप्तभी मनुष्यकी निस्सन्देह रक्षा करैहै ॥ ३ ॥

चन्द्रः सम्पूर्णतनुः सौम्यर्क्षगतः स्थितः शुभस्यान्तः ॥ प्रकरोति रिष्टभङ्गं विशेषतः शुक्रसंदृष्टः ॥ ४ ॥

सं० टी०— स्पष्टार्थः ॥ ४ ॥

भाषार्थः—जो संपूर्ण कलाओंसे युक्त चंद्रमा शुभग्रहकी राशिमें हो और शुभग्रहोंके अंतर्गत हो तो अरिष्टोंको भंग करताहै. विशेषकरके शुक्रकी दृष्टि हो तोभी अरिष्टोंको नाश करैहै. ॥ ४ ॥

बुधभार्गवजीवानामेकतमः केन्द्रमागतो बलवान् ॥ यद्यपि क्रूरसहायः सद्यो रिष्टस्य भङ्गाय ॥ ५ ॥

सं० टी०— स्पष्टार्थः ॥ ५ ॥

भाषार्थः—बुध, शुक्र, बृहस्पति इन ग्रहोंमेंसे एकभी ग्रह बली होवे केंद्रमें हो तो जो क्रूरभी सहायक हो तोभी अरिष्टभंग शीघ्रही जानना ॥ ५ ॥

रिपुभवनगतोऽपि शशी गुरुसितचन्द्रात्मजदृकाणस्थः ॥ गरुड इव भोगिदष्टं परिरक्षत्येव निर्व्याजम् ॥ ६ ॥

सं० टी०— स्पष्टार्थः ॥ ६ ॥

भाषार्थः—छठे स्थानमें प्राप्त चंद्रमा बृहस्पति शुक्र बुधके द्रेष्काणमें स्थित हो तो जैसे गरुड ( सर्प )से काटे हुए की रक्षा करैहैं तैसेही निस्सन्देह रक्षा करै है ॥ ६ ॥

सौम्यद्वयान्तरगतः सम्पूर्णः स्निग्धमण्डलः शशभृत् ॥ निःशेषरिष्टहन्ता भुजङ्गलोकस्य गरुडइव ॥ ७ ॥

सं० टी०— स्पष्टार्थः ॥ ७ ॥

भाषार्थः—जो पूर्ण चंद्रमा दो शुभ ग्रहोंके अंतर्गत हो तो संपूर्ण अरिष्टोंको नाश करै. जैसे गरुड सर्पोंका नाश करै है ॥ ७ ॥

शशभृति पूर्णशरीरे शुक्ले पक्षे निशाभवे काले ॥ रिपुनिधनस्थे रिष्टं प्रभवति नैवात्र जातस्य ॥ ८ ॥

सं० टी०— स्पष्टार्थः ॥ ८ ॥

भाषार्थः—जो पूर्णकलायुक्त चंद्रमा शुक्लपक्षमें रात्रि समय हो तो छठे आठवें स्थित चंद्रमा अरिष्ट होनेसे बालकको अरिष्ट नहीं करैहै ॥८॥

प्रस्फुरितकिरणजाले स्निग्धामलमण्डले बलोपेते ॥ सुरमन्त्रिणि केन्द्रगते सर्वारिष्टं शमं याति ॥ ९ ॥

सं० टी०— स्पष्टार्थः ॥ ९ ॥

भाषार्थः—जो बृहस्पति अपने अंशोंमें पूर्ण और उदयी हो तथा बलवान् हो और केन्द्रस्थानमें स्थित हो तो सम्पूर्ण अरिष्टोंको नाश करैहै. ॥ ९ ॥

सौम्यभवनोपयाताः सौम्यांशकसौम्यदृक्का-

णस्थाः॥ गुरुचन्द्रकाव्यशशिजाः सर्वे रिष्टस्य हन्तारः ॥ १० ॥

सं० टी०— स्पष्टार्थः ॥ १० ॥

भाषार्थः—जो शुभग्रहकी राशिमें प्राप्त और शुभग्रहके नवांशमें तथा शुभग्रहके द्रेष्काणमें स्थित बृहस्पति, चन्द्रमा, शुक्र, बुध हों तो सम्पूर्ण दोषोंको नाश करनेवाले जानने ॥ १० ॥

चन्द्राध्यासितराशेरधिपः केन्द्रे शुभग्रहो वापि ॥ प्रशमयति रिष्टयोगं पापानि यथा हरिस्मरणम् ॥ ११ ॥

सं० टी०— स्पष्टार्थः ॥ ११ ॥

भाषार्थः—चंद्रस्थित राशिका स्वामी जो केन्द्रमें हो अथवा शुभग्रह हो तो अरिष्टयोगोंको नाश करताहै, जैसे हरिका स्मरण पापोंको नाश करैहै ॥ ११ ॥

पापा यदि शुभवर्गे सौम्यैर्दृष्टाः शुभेशवर्गस्थैः ॥ निघ्नन्ति तदा रिष्टं पतिं विरक्ता यथा युवतिः ॥ १२ ॥

सं० टी०— स्पष्टार्थः ॥ १२ ॥

भाषार्थः—जो पापग्रह शुभग्रहोंके वर्गमें हों और शुभग्रहोंकरके दृश्यमान शुभग्रहोंके वर्गमें स्थित हों तो अरिष्टोंको नाश करतेहैं जैसे विरक्त स्त्री पतिको ॥ १२ ॥

राहुस्त्रिषष्ठलाभे लग्नात्सौम्यैर्निरीक्षितः सद्यः ॥ नाशयति सर्वदुरितं मारुत इव तूलसङ्घातम् ॥ १३ ॥

सं० टी०— स्पष्टार्थः ॥ १३ ॥

भाषार्थः—जो राहु जन्मलसे तीसरे छठे ग्यारहवें स्थानमें हो और शुभग्रहोंकी दृष्टि हो तो शीघ्र सम्पूर्ण दोषोंको नाश करताहै. जैसे पवन तूल ( रुई )के समूहको उड़ावैहै ॥ १३ ॥

शीर्षोदयेषु राशिषु सर्वे गगनाधिवासिनः सूतौ ॥ प्रकृतिस्थैश्चारिष्टं विलीयते घृतमिवाग्निस्थम् ॥ १४॥

सं० टी०— स्पष्टार्थः ॥ १४ ॥

भाषार्थः—जो शीर्षोदयराशि कहिये मे० वृ० क० ध० म० इन राशियोंमें जन्मसमयमें सम्पूर्ण ग्रह स्थित होवैं तो सम्पूर्ण दोषोंका नाश जानिये. जैसे अग्निमें स्थित घी नाश होवैहै ॥ १४ ॥

पक्षे सिते भवति जन्म यदि क्षपायां कृष्णे तथाऽहनि शुभाशुभदृश्यमानः ॥ तं चन्द्रमा रिपुविनाशगतोऽपि यत्नादायात्सुरक्षति पितेव शिशुं न हन्ति ॥ १५ ॥

सं० टी०— स्पष्टार्थः ॥ १५ ॥

भाषार्थः—जिसका जन्म शुक्लपक्षमें रात्रिको होवे तथा कृष्णपक्षमें दिनको होवे और पापग्रह शुभग्रहभी देखते हों तो छठे आठवें स्थानमें भी स्थित चन्द्रमा उस बालकको पिताके समान रक्षा करताहै. मारता नहीं ॥ १५ ॥

तत्काले यदि विजयी शुभग्रहः शुभनिरीक्षितोऽवश्यम् ॥ नाशयति सर्वरिष्टं मारुत इव पादपान्प्रबलः ॥ १६ ॥

इत्यरिष्टभङ्गाध्यायोऽष्टमः ॥ ८ ॥

सं० टी०— स्पष्टार्थः ॥ १६ ॥

भाषार्थः—जो जन्मसमय बलयुक्त शुभग्रहको शुभग्रह देखे हों तो अवश्य सम्पूर्ण अरिष्टोंको नाश करताहै. जैसे प्रचंड पवन वृक्षोंको ॥ १६ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायामरिष्टभङ्गाध्यायोऽष्टमः ॥ ८ ॥

# अथ ग्रहायुर्दायाध्यायः ॥

## ह्युर्दायः ।

राश्यंशकला गुणिता द्वादशनवभिर्ग्रहस्य भगणेभ्यः ॥ द्वादशहृतावशेषेऽब्दमासदिननाडिकाः क्रमशः ॥ १ ॥

सं० टी०—अथायुर्दायाध्यायं व्याख्यास्यामस्तत्र पुरुषजन्मकाले स्फुटगणितेन विशेषकर्मणा स्फुटा ग्रहाः तात्कालिकाश्च कर्तव्याः लग्नं च तात्कालिकं कर्तव्यं तात्कालिकस्यैकैकस्यायुर्दायः कर्तव्यः। तत्करणोपायमाह। तात्कालिकग्रहस्य राश्यंशकलाविकलाः पृथक् द्वादशभिर्गुणिताः ततो नवभिर्गुणिता एवमष्टाधिकशतेन गुणिताः कार्याः विलिप्तानां मध्ये व्युत्क्रमेण षष्ट्या भागमपहृत्यावाप्तं कलासु योज्यम् यदवशिष्टं पलानि। कलाभ्यो षष्ट्या भागमपहृत्यावाप्तं अंशेषु योज्यं शेषं घटचः ततो भागेषु त्रिंशता भागमपहृत्यावाप्तं राशिषु योज्यं शेषं दिवसाः। ततो राशिषु द्वादशभिर्भागमपहृत्यावाप्तं ते भगणाः शेषं मासाः। भगणानामपि द्वादशभागमपहृत्यावाप्तं त्याज्यम्। शेषाणि वर्षाणि। एवमब्दमासदिननाडिकाः क्रमश इति। उदाहरणम्। तद्यथा—स्फुटग्रहः ३।२९।५९।५९ अस्य राश्यंशकलाविकला द्वादशभिर्गुणिता जातं ३६।३४८।७०८ पुनरपि नवभिर्गुणिताः ३२४।३१३२।६३७२।६३७२ ततो विलिप्तिकासु एतासु षष्ट्या भागमपहृत्यावाप्तं १०६ तत्कलासु योजितं ६४७८ शेषम् १२ पलानि ताभ्यो षष्टिभागमपहृत्यावाप्तं १०७ अंशेषु योजितं ३२३९ शेषम् ५८ एताः घटचः। ततो एषु त्रिंशता लब्धम् १०७ तद्राशिषु युक्तम् ४३१ शेषम् २९ एते दिवसाः पुनः राशौ द्वादशभागेन लब्धम् ३५ एते

भगणाः शेषम् ११ एते मासाः। भगणेभ्यो द्वादशभागेन लब्धम् १ निरुपयोगत्वात् त्याज्यं शेषम् ११ वर्षाणि। वर्षमासदिनघटीपलादेरधः स्थापना कार्या। एवं सर्वेषां ग्रहाणां करणीयम्। एवं कृते शेषायुर्दायो भवति ॥ १ ॥

भाषार्थः—अब आयुर्दायाध्याय वर्णन करतेहैं- स्पष्ट ग्रहकी राशि अंशकलाको प्रथम बारहसे फिर नवसे गुणे पश्चात् कलाके स्थानमें गुणे अंकोंमें साठका भाग देके शेष रहें सो घटी और लब्धांक अंशोंके स्थानमें जो अंक है उनमें मिलाय तीसका भाग देनेसे शेष दिन जानना, लब्धांक राशिके स्थानवाले अंकोंमें मिलाय बारहका भाग दे शेष मास और लब्ध वर्ष जानना, इसप्रकार ग्रहायुर्दायमें वर्ष, मास, दिन, घटी, क्रमसे जानना ॥ उदाहरण-स्पष्ट सूर्य राश्यादि रा. १ अं. ५ क. १०।१२ बारहसे गुणा तो १२।६०।१२० भये. फिर नवसे गुणा तो १०८।५४०।१०८० भये अब १०८ में साठ ६० का भाग दिया शेष ०० घटी शून्य, लब्ध १८ सो ५४० में मिलाये तो ५५८ भये ३० का भाग दिया शेष १८ दिन भये, लब्ध जो १८ सो १०८ में युक्त किये तो १२६ भये बारह १२ का भाग दिया तो शेष ६ मास भये, और लब्ध १० वर्ष हुये तो सूर्यका आयुर्दाय वर्षादि १०।६।१८।०० भया. इसीप्रकार जन्मसमय सम्पूर्ण स्पष्ट ग्रहोंकी आयुर्दाय बनाना ॥ १ ॥

## लग्नायुर्दायः।

**होरादायेऽप्येवं बलयुक्ताऽन्यानि राशितुल्यानि ॥ वर्षाणि संप्रयच्छन्त्यनुपाताच्चांशकादिफलम् ॥ २ ॥**

सं० टी०—लग्नायुर्दायमाह। होरा लग्नं तद्दायः यथा ग्रहस्यायुर्दायः कृतः तथा लग्नस्य कार्यः सा होरा यदि बलयुक्ता तदाऽन्यानि वर्षाणि राशितुल्यानि प्रयच्छन्ति। लग्नस्य यावन्तो भुक्तराशयः तत्समानानि वर्षाणि ददति तानि आयुर्दाये योज्यानि अनुपाताच्चांशकादिफलम्। अनुपातस्त्रैराशिकगणितमभिधीयते। लग्नस्य राशीनपास्य भागादिलिप्तापिण्डः कार्यः तल्लिप्तापिण्डं द्वादशभिः संगुण्य अष्टादशभिः शतैः १८०० विभज्यावाप्तं मासाः मासशेषं त्रिंशता ३० संगुण्य अष्टादश-

शतत्रिभागेन लब्धदिवसाः। दिनशेषम् षष्टिगुणितं कृत्वा अष्टादशशतै-र्लब्धं घटिकाः। घटिकाशेषम् षष्टिगुणं कार्यम् अष्टादशशतैर्लब्धं पलानि एवमनुपातेन लब्धो मासादिर्लग्नस्यायुर्दायो ज्ञेयः ॥ २ ॥

भाषार्थः—अब लग्नका आयुर्दाय कहतेहैं—कि जिस प्रकार ग्रहोंका आयु प्रथम कहा, तैसेही लग्नकाभी आयु निकालना और जो लग्न बली हो तो राशितुल्य वर्षको देवे. अथवा लग्नमें जिस राशिका सवर्ण नवांश लग्नने भोग किया होय. उतने वर्ष लग्नके कहना. और आदि शब्दकरके अंश, कला, विकला, तिनमें अनुपात करके अर्थात् त्रैराशिक गणितानुकूल मास, दिन, घटी जानना, त्रैराशिक यह है कि अंश जो हैं तिनको लिप्त करै. अर्थात् ६०सें गुण दे कला जोड़दे फिर १२ से गुणै और १८०० से भागदे लब्ध अंक हो सो मास, शेष अंकको ३० से गुणके १८०० से भाग देनेसे लब्ध दिन जानना, शेषांकको ६०से गुणके पुनः १८००से भाग ले लब्ध घटी जानना. उदाहरण–स्पष्टलग्नराश्यादि १।५।८ अंशोंकी लिप्तपिंडी किया तो ५ अंश ६०से गुणा तो ३०० हुये उनमें ८ जोड़ दिये तो ३०८ भये, बारहसे गुणा तो ३६९६ भये. १८०० से भाग दिया लब्ध २ मास भये, शेष ९६ सो ३०से गुणा तो २८८० भये. १८००से भाग दिया तो लब्ध १ दिन भया शेष १०८०को ६०से गुणा तो ६४८०० भया. १८००से भाग दिया लब्ध ३६ घटी शेष शून्य पल जानना, तो लग्नका आयुमासदि २।१।३६।० भया. वर्ष पूर्व कह चुकेहैं. तदनुसार जानना. यह ग्रह और लग्न दोनोंका आयु कहा ॥ २ ॥

## ग्रहायुर्दायविशेषम् ।

**वर्गोत्तमस्वराशिद्रेष्काणनवांशके सकृद्द्विगुणम्॥वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणित्वे सकृत्त्रिगुणम् ॥ ३ ॥**

सं० टी०— ग्रहायुर्दायविशेषमाह । यो ग्रहो वर्गोत्तमे स्थितः तदायुर्दायो द्विगुणः कार्यः यः स्वराशौ भवति स्वद्रेष्काणे स्वनवांशके भवति तद्दत्तायुर्दायो द्विगुणः कार्यः यस्तु वक्री भवति तद्दत्तायुर्दायं

स्त्रिगुणः यस्तूच्चराशौ भवति तस्यापि त्रिगुणः कार्यौ द्वित्रिगुणत्वे सकृत्त्रिगुणं सकृदेकवारं त्रिगुणं वक्तव्यम् ॥ ३ ॥

भाषार्थः—अब आयुर्दायमें विशेष कहतेहैं—जो ग्रह अपने वर्गोत्तममें हो वा अपनी राशि वा द्रेष्काण तथा नवांशामें हो उस ग्रहकी आयुको द्विगुण करना, तथा जो ग्रह वक्री हो वा अपने उच्चराशिमें हो उसकी आयु त्रिगुण करदेना और जहाँ द्विगुण दोनों पाये जायँ तहां एकबार त्रिगुण करना जो ग्रह अपने राशि नवांशा द्रेष्काण आदिमें हो तो एकही बार द्विगुण करना किंच "एकं तु यद्भूरि तदेव कार्यं" अर्थात् एक जो बहुत है सोई करना ॥ ३ ॥

## शत्रुक्षेत्रस्थग्रहायुर्हानिः ।

शत्रुक्षेत्रे त्र्यंशे नीचेऽर्धं सूर्यलुप्तकिरणाश्च ॥
क्षपयति स्वायुर्दायन्नास्तं यातौ रविज-
शुक्रौ ॥ ४ ॥

सं० टी०— शत्रुक्षेत्रस्थितग्रहायुर्दायहानिमाह । भौमं वर्जयित्वा शत्रुराशिव्यवस्थितो ग्रहः स्वदत्तायुषस्त्रिभागमपहर्ति । यश्च स्वनीचराशौ भवति स स्वदत्तायुषोऽर्धमपहरति। अस्तंगतो ग्रहोऽर्धं हरति । शुक्रशनैश्चरौ अस्तंगतावपि नार्धं हरतः ॥ ४ ॥

भाषार्थः—जो ग्रह अपने शत्रुके घरमें हो सो ग्रह अपने आयुर्दायमेंसे त्र्यंश कहिये तीसरा हिस्सा कमती करै, जो ग्रह नीचका हो सो आधी आयु घटावै, और सूर्यके साथ जो ग्रह हो सो भी आधी आयु हरण करैहै. परंतु शनि, शुक्र, सूर्यके साथमें भी अपनी आयु हरण नहीं करते. और अस्त नहीं होते. और मंगल शत्रुराशिमें हो तो अपना आयु हरण नहीं करता. क्योंकि ऐसा लिखा है. "हित्वा वक्रं रिपुगृहगतं हीयते स्वत्रिभागः" ॥ ४ ॥

## चक्रपातेनायुर्हानिः ।

सर्वार्धत्रिचतुर्थेन्द्रियषष्ठभागान् व्ययाद्धरन्त्य-

शुभाः ॥ सन्तो र्धमतो वामं बलवानेकर्क्षगे-
ष्वेकः ॥ ५ ॥

इति श्रीवराहमिहरकृते लघुजातके आयुर्दाया-
ऽध्यायो नवमः ॥ ९ ॥

सं० टी०—चक्रपातेनाप्यायुषोहानिमाह । यः पापग्रहो वामं विपरीतं सप्तमभवनं यावल्लग्नाद्द्वादशे स्थितः स सर्वमायुर्दायं हरति । यः एकादशे सः अर्धम् यो दशमे स त्रिभागं यः नवमे स चतुर्थांशं योऽष्टमे स पञ्चमाशं सप्तमस्थः षड्भागमेवं हरंति पापाः । शुभास्तु सौम्यग्रहो लग्नाद्द्वादशस्थः स्वादायुषोर्धं हरति एकादशस्थचतुर्भागं दशमस्थः षड्भागं नवमस्थोऽष्टमभागं अष्टमस्थो दशमभागं सप्तमस्थो द्वादशभागं द्वादशैकादशदशमनवमाष्टमसप्तमेषु यावत् बहुषु ग्रहेषु एकर्क्षगेषु यो बलवान्स एव यथोक्तं स्वायुर्दायमपहरति नान्यः ॥ ५ ॥

इति लघुजातके टीकायां आयुर्दायाऽध्यायो नवमः ॥९॥

भाषार्थः—अब चक्रपातकरके आयुहानि कहतेहैं—जन्मलग्नसे बारहवें स्थान जो पापग्रह हो वह अपना सब आयु हरण करताहै, ग्यारहवें स्थानमें जो पापग्रह हो वह आधा आयु हरण करै, दशवें पापग्रह हो तो तीसरा हिस्सा आयुका अपहरण करै, नवमस्थानमें पापग्रह हो तो वह चौथा हिस्सा अपहरण करै, अष्टम हो तो पाचवां हिस्सा, सप्तम हो तो छठा हिस्सा अपहरण करै. और जो शुभग्रह बारहवें हो तो अपना आधा आयु हरण करताहै. ग्यारहवें हो तो चौथा हिस्सा, दशवें हो तो छठा हिस्सा, नवें हो तो आठवां हिस्सा, आठवें शुभग्रह हो तो दशवां हिस्सा, सातवें हो तो बारहवां हिस्सा. यदि इन स्थानोंमें कई ग्रह हों तो जो ग्रह अधिक बली हो वही ग्रह अपने आयुमेंसे अपहरण करै. अन्य नहीं ॥ ५ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकाया-
मायुर्दायाध्यायो नवमः ॥ ९ ॥

## अथान्तर्दशाध्यायः ।

### तत्रादौदशाप्रमाणम् ।

शोध्यक्षेपविशुद्धः कालो यो येन जीविते दत्तः ॥ स विचिन्त्यस्तस्य दशा स्वदशासु फलप्रदाः सर्वे ॥ १ ॥

सं० टी०— अथ दशाप्रमाणमाह । प्रथमं ग्रहस्यायुर्दायः कर्तव्यः ततस्तस्य चक्रपातेन हानिर्या भवति सा कार्या यत्र द्वित्रिगुणितं भवति तदपि कार्यम् । एवं कृते शोध्यक्षेपविशुद्धः कालो भवति शोध्यो हानिः क्षेपो गुणना तेन शुद्धः कालो येन ग्रहेण जीविते दत्तस्तावत्कालं यस्य ग्रहस्य सम्बन्धिनी दशा भवेदेवं विचिन्त्य शुभाशुभफलं ग्रहाणां दशाजं बोध्यम् ॥ १ ॥

भावार्थः—अब दशान्तर्दशाध्याय कहतेहैं—कि प्रथम ग्रहका जो आयुर्दाय कहा है उसमें जिस ग्रहका जितना बर्ष मासादि आया हो वही प्रमाण उस ग्रहकी दशाका जनना. और सब ग्रह अपने दशान्तर्दशाकालमें फल देतेहैं ॥ १ ॥

### दशाक्रमः ।

लग्नार्कशशाङ्कानां यो बलवांस्तद्दशा भवेत् प्रथमा ॥ तत्केंद्रपणफरापोक्लिमगतानां बलाच्छेषाः ॥ २ ॥

सं० टी०— ग्रहदशाप्रमाणे क्रममाह । लग्नार्कचंद्राणां मध्ये यो बलवांस्तस्य प्रथमा दशा भवेत् ततः प्रथमदशापतेर्यावन्तो ग्रहाः केन्द्रस्था भवन्ति तेषां बलाधिक्येन भवेद्दशा एवं सर्वेषां केन्द्रस्थानां कल्पयित्वा ततः पणफरस्थानामनेन क्रमेण कर्तव्या ततः आपोक्लिमस्थानगतानां तेनैव क्रमेण दशा भवति । शेषा बलात् ज्ञातव्याः ॥ २ ॥

भावार्थः—प्रथम किसकी दशा होतीहै सो कहतेहैं—कि लग्न, सूर्य, चंद्रमा, इन तीनोंमें जो अधिक बली होवे उसीकी प्रथमा दशा जानना.

तदनन्तर केंद्र १।४।७।१० में स्थित बलवान् ग्रहकी दशा होतीहै, पश्चात् पणफर २।५।८।११ में स्थित बली ग्रहकी दशा होतीहै, फिर आपोक्लिम ( ३।६।९।१२ )में स्थित ग्रह जो बली हो उसकी दशा होतीहै. शेष दशा बलप्रमाणसे जानना ॥ २ ॥

## दशाशुभाशुभज्ञानम् ।

मित्रोच्चस्वगृहांशोपगतानां शोभना दशाः सर्वाः ॥ स्वोच्चाभिलाषिणामपि न तु कथितविपर्ययस्थानाम् ॥ ३ ॥

सं० टी०—एवं दशापतौ ज्ञाते तद्दशाशुभाशुभज्ञानमाह । जन्मकाले यो ग्रहो मित्रक्षेत्रस्थः यश्च स्वोच्चस्थः यश्च स्वक्षेत्रस्थः स्वनवांशगतः तस्य दशा शोभना उच्चाद्द्वादशराशौ नवमनवांशस्थः उच्चाभिलाषी तस्यापि दशा शोभना नतु विपरीतगतानां । जन्मकाले यो ग्रहः शत्रुक्षेत्रस्थः शत्रुनवांशस्थः नीचस्थः नीचाभिलाषी तस्य दशा दुष्टा अशुभा अन्यस्थानस्थितस्य ग्रहस्य मध्यदशा भवति ॥३॥

भाषार्थः—अब शुभाशुभदशाज्ञान कहतेहैं—कि जन्मसमय जो ग्रह मित्रके घरमें हो, जो ग्रह अपनी उच्चराशिमें हो तथा जो अपनी राशिमें स्थित हो, अपने नवांशामें हो वह ग्रह अपने सम्पूर्ण दशामें शुभ फल करनेवाला जानना, और जो ग्रह उच्चाभिलाषी . अर्थात् अपनी उच्चराशिपर जानेवाला हो वह भी शुभफल देनेवाला जानना, और जो इससे विपरीत हो अर्थात् अपने शत्रुके घरमें वा नीचराशिमें तथा शत्रुके नवांशामें अथवा नीचाभिलाषी हो वह ग्रह अशुभ फल देनेवाला जानना ॥ ३ ॥

## लग्नदशाफलम् ।

होरादशा दृकाणैः पूजितमध्याधमा चरे क्रमशः ॥ द्विशरीरे विपरीता स्थिरेषु पापेष्टमध्यफला ॥ ४ ॥

सं० टी०—होरा लग्नं तस्य दशा द्रेष्काणैः शुभाऽशुभा ज्ञेया। तत्र चरराशौ लग्नगते प्रथमद्रेष्काणे जातस्य पूजिता दशा भवेत्। द्वितीये मध्यफला तृतीये अधमा नेष्टा। अनुक्रमेण द्विशरीरं विपरीता तेन द्विस्वभावराशौ लग्नगते प्रथमद्रेष्काणे पूजिता शुभा स्थिरे स्थिरराशौ लग्नगते प्रथमद्रेष्काणे पापा द्वितीये इष्टफला तृतीये द्रेष्काणे मध्यफला ॥ ४ ॥

भाषार्थः—अब लग्नदशामें शुभाशुभ फल कहतेहैं–कि चर लग्न हो और पहले द्रेष्काणमें जन्म हो तो शुभफल देवै है, दूसरा द्रेष्काण हो तो मध्यम फल देवे, तीसरा द्रेष्काण हो तो अशुभ फल देवै है, और जो द्विःस्वभाव लग्नका जन्म हो और पहला द्रेष्काण हो तो अशुभ फल देवे, दूसरा द्रेष्काण हो तो मध्यम फल, तीसरा द्रेष्काण हो तो शुभफल देवे, और स्थिर लग्न हो और पहला द्रेष्काण हो तो पाप ( अशुभ ) फल करै है, दूसरे द्रेष्काणमें शुभ फल कहना, तीसरे द्रेष्काणमें मध्यम फल कहना ॥ ४ ॥

## अन्तर्दशाक्रमः ।

**एकर्क्षेऽर्धं त्र्यंशं त्रिकोणयोः सप्तमे तु सप्तांशम् ॥ चतुरस्रयोस्तु पादं पाचयति गतो ग्रहः स्वगुणैः ॥ ५ ॥**

सं०टी०—अंतर्दशामाह। येन ग्रहेण सह यो ग्रहः एकर्क्षे स्थितः स तद्दत्तदशाया अर्धमपहृत्य स्वैर्दशागुणैः पाचयति। दशापतेस्त्रिकोणयोः स्थितग्रहः दशापतिदत्तदशाया त्र्यंशं पाचयति। दशापतेः सप्तमे स्थाने स्थितो ग्रहो दशापतिदत्तदशाकालात्सप्तमांशं स्वैर्गुणैः पाचयति। दशापतेश्चतुर्थस्थानस्थोऽष्टमस्थानस्थो ग्रहः पादं चतुर्थांशं दशापतिदत्तकालादपहृत्य स्वगुणैः पाचयति न केवलं ग्रहाल्लग्नादपि एतेषु स्थानेषु समवस्थितो ग्रहः यथोक्तमंशं पाचयति यद्येकस्थां बहवो भवंति तदा तेषु मध्ये बलवान् स एव पाचयति नान्यः ॥५॥

भाषार्थः—अब स्थूलमतसे अन्तर्दशाक्रम कहतेहैं–पूर्व जो स्थूलदशा कह आयेहैं, उन ग्रहोंके साथ जो ग्रह हो वह स्थूल ग्रहोंकी दशामेंसे आधा हिस्सा अपहरण करके शुभाशुभ फल देवै है. और दशापतिसे

त्रिकोणमें जो ग्रह हो वह दशापतिके स्थूलमेंसे तीसरा हिस्सा लेके अपना शुभाशुभ फल देवे है, और जो ग्रह दशापतिसे सातवें हो वह स्थूलमेंसे सातवां हिस्सा लेके अपना शुभाशुभ फल देवै है. तथा जो ग्रह दशापतिसे चौथे आठवें है वह स्थूलमेंसे चौथा हिस्सा लेके उसमें अपना शुभाशुभ फल देवै है. जो एकराशिमें अनेक ग्रह हों तो उनमें जो अधिक बली हो वही अपना हिस्सा पाचन करै ॥ ८ ॥

## विशेषान्तर्दशाक्रमः ।

**भागाः सदृशच्छेदैर्विवर्जिताः संयुता दशाच्छेदाः॥ प्रत्यंशगुणाकाराः पृथक् पृथक् चान्तर्दशास्ताः ॥ ९ ॥**

सं०टी०—"भागादौ तु सदा रूपं विन्यस्य सदृशीकृतम् ॥ न पृच्छेदांशसंयोगैश्छिद्यादंतर्दशाफलम् ॥ रूपस्थानगतैरंशैर्यल्लब्धं संगुणीकृतम् । दशा ह्यंतर्दशा प्रोक्ता नित्यं यवनसूरिभिः" दशापतेर्दर्शितस्थानेषु यो ग्रहो भवति तत्स्थानोक्तसंस्थाभागाः रूपस्याधः स्थाप्याः दशापतेरादावेव रूपं परिकल्पयेत् ततः परस्परच्छेदहताः कार्याः। एकैकं प्रत्येकेन छेदेन गुणयेत् एवं कृते भागाः सदृशच्छेदाः भवन्ति। उपरिगता राशयो दशापिण्डस्य पृथक् पृथक् गुणाकाराः भवन्ति। एकीकृताश्च सर्वेषां एकएव भागहारः एवं गुणितविभक्ता ग्रहदत्तायुःपिण्डात्पृथक् पृथक् अन्तर्दशा लभ्यते तद्यथा-

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | २ | ३ | ७ | ४ |

भागाः एते भागाः परस्परच्छेदेनं हताः सांशाः कार्याः यावत्सर्वएव समच्छेदा भवंति कृता एवंविधा जाताः एते एव संयुक्ता जाताः ३७४ छेदाः ग्रहदत्तायुःपिण्डवर्षमासदिवस

| | | | | |
|---|---|---|---|---|
| १६८ | ८४ | ५६ | २४ | ४२ |
| १६८ | १६८ | १६८ | १६८ | १६८ |

घटिकांतं संस्थाप्य पृथक् पृथक् गुणकारेण गुणयेत् घटिकानां षष्ट्या भागमपहृत्य दिवसेषु क्षिपेत् दिवसानां त्रिंशता भागमपहृत्य मासेषु क्षिपेत् मासानां द्वादशभिर्भागमपहृत्य वर्षेषु क्षिपेत् भवद्योगं सर्वं स्थाप्यं ततो वर्षस्थानेषु भागहारेण ३७४ भागमपहृत्यावाप्तं वर्षाणि । शेषं द्वादशभिः संगुण्यावस्थितान् मासान् संयोज्य छेदेन

विभज्य अवाप्तं मासाः वर्षाणामधः स्थाप्याः । तदेवं शेषं त्रिंशता संगुण्यावस्थितानि दिनानि संयोज्य छेदेन विभज्यावाप्तं दिवसाः ते मासानामधः स्थाप्याः । तदेवं शेषं षष्ट्या संगुण्यावस्थिता घटिकाः संयोज्य छेदेन विभज्यावाप्तं घटिका दिवसानामधः । स्थाप्याः एवं यथासम्भवं सर्वेषां ग्रहाणामन्तर्दशाः कार्याः । दशांविभागक्रमेणैवान्तर्दशाविभागकल्पना कर्त्तव्या । विदशोपदशाविभागोऽप्येवमेव ॥ ६ ॥

भाषार्थः—अब अन्तर्दशाका विशेष क्रम कहतेहैं—पूर्वश्लोकमें जो अन्तर्दशाक्रम कह आये हैं उसको लीलावतीकी रीतिके अनुसार समच्छेद उपरांत जो समच्छेद कियेहैं. तिन छेदोंका लोप कर देना, और समच्छेद करके जो गुणे हुये भाग बचे सो जो अंक उनको एकत्र करना. एकत्र करनेसे जो समुदायांक भया सो अन्तर्दशाका छेद कहलाताहै. अर्थात् उस अंकसे भाग लिया जाताहै. और अन्तर्दशाके हिस्सोंमें अंशके अंक समच्छेदकरके सिद्ध हुये हैं सो ग्रहोंकी दशाके वर्षोंके गुणक कहलाते हैं. अर्थात् ग्रहकी दशाके जो वर्ष हैं तिनको अपने २ गुणकसे गुण देना और पहले जो छेदांक कह आयेहैं. उनसे भाग देनेसो जो पृथक् पृथक् अंक लब्धि आवै सोई ग्रहोंकी वर्षादिक अन्तर्दशा जानना ॥ ६ ॥

### यवनान्तर्दशाक्रमः ।

रूपस्थानगतैरंशैस्तल्लब्धं त्रिगुणीकृतम् ॥
दशा चान्तर्दशा प्रोक्ता नित्यं यवनसूरिभिः ७॥

इति श्रीवराहमिहराचार्यविरचिते लघुजातके
दशान्तर्दशाध्यायः दशमः ॥१०॥

सं०टी०—स्पष्टार्थः ॥ ७ ॥

इत्यन्तर्दशाऽध्यायो दशमः ॥ १० ॥

भाषार्थः—अब यवनाचार्यके मतसे अंतर्दशाक्रम कहतेहैं—रूपस्थानगत कहिये गुणनेसे जो प्राप्त हुये अंक हैं तिनसे भाग देनेसे जो

लब्धांक तिनको त्रिगुण करके रक्खै सो ग्रहोंकी दशामें अन्तर्दशा होतीहैं. यह यवनाचार्योंने कहा है ॥ ७ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां दशान्तर्दशाऽध्यायः दशमः ॥ १० ॥

## अथाष्टकवर्गोऽध्यायः ॥ ११ ॥

**केन्द्रायाष्टद्विनवस्वर्कः स्वादार्किभौमतश्च शुभः ॥ षट्सप्तान्त्येषु सितात् षडायधीधर्मगो जीवात् ॥ १ ॥**

सं०टी०—अथाष्टकवर्गः । जन्मकाले यत्रार्को व्यवस्थितः तस्मात्स्थानात्केन्द्रायाष्टद्विनवसु १।४।७।१०।११।८।२।९ अर्कः शुभः।आर्किभौमाभ्यां एतेषु स्थानेषु शुभः । षट्सप्तान्त्येषु सितात् ६।७।१२ एतेषु शुक्राच्छुभः । षडायधीधर्मगो जीवात् ६।११।५।९ एतेषु स्थानेषु गुरोः सकाशाच्छुभः ॥ १ ॥

भाषार्थः—अब अष्टकवर्गाध्यायं कहतेहैं—तहां प्रथम सूर्यका अष्टकवर्ग कहतेहैं—जो ग्रह जहांसे राशियोंपर घूमनेसे जो शुभाशुभ फल देताहै सोई अष्टकवर्ग कहलाताहै. सूर्यका अष्टकवर्ग यह है कि सूर्य जहां स्थित हो वहांसे केन्द्र १।४।७।१० में आय कहिये ग्यारहवें, आठवें, दूसरें, नवें, सूर्य शुभदायक जानना और इन्ही घरोंमें शनैश्चर मंगलसे सूर्य शुभ फल देते हैं और शुक्रसें ६।७।१२ स्थानोंमें सूर्य शुभ जानना. बृहस्पतिसें ६।११।५।९ इन स्थानोंमें सूर्य शुभजानना. ॥ १ ॥

**उपचयगोऽर्कश्चंद्रादुपचयनवमांत्यधीयुतः सौम्यात् ॥ लग्नादुपचयबंधुव्यवस्थितः शोभनःप्रोक्तः ॥ २ ॥**

सं०टी०—चंद्रादुपचयगः ३।६।११।१० एतेषु चन्द्राच्छुभः । सौम्यादुपचयनवान्त्यधीयुतः ३।६।११।१०।९।१२।५ एतेषु सौम्याच्छुभः । लग्नादुपचयबन्धुव्यवस्थितः ३।६।११।१०।४।१२ एतेषु शुभः लग्नात् । इति सूर्यः ॥ २ ॥

भाषार्थः—चन्द्रमासे ३।६।१०।११ इन स्थानोंमें बुधसे ३।६।१०।११।१२।९।८ स्थानोंमें लग्नसे ३।६।१०।११।४।१२ इन स्थानोंमें सूर्य स्थित हो तो शुभ कहा है. ॥ २ ॥ यह सूर्यका अष्टकवर्ग है सो जानना. यही सूर्याष्टकवर्गचक्र जो ऊपर लिखा है इसमें जानना. इसीप्रकार चन्द्रादिग्रहोंका अष्टवर्ग चक्र लिखेंगे उन्हीं चक्रोंपरसे देखना ॥

अथ रवेरष्टकवर्गाङ्काः ।

| सू | च | म | बु | बृ | शु | श | ल |
|---|---|---|---|---|---|---|---|
| १ | ३ | १ | ३ | ३ | ६ | १ | ३ |
| २ | ६ | २ | ५ | ६ | ७ | २ | ४ |
| ४ | १० | ४ | ६ | ९ | १२ | ४ | ६ |
| ७ | ११ | ७ | ९ | ११ | ० | ७ | १० |
| ८ | ० | ८ | १० | ० | ० | ८ | ११ |
| ९ | ० | ९ | ११ | ० | ० | ९ | १२ |
| १० | ० | १० | १२ | ० | ० | १० | ० |
| ११ | ० | ११ | ० | ० | ० | ११ | ० |

चन्द्राष्टकवर्गः ।

शश्युपचयेषु लग्नात्साद्यमुनिः स्वात् कुजात्स्वनवधीभ्यः ॥ सूर्यात्साष्टस्मरगस्त्रिषडायसुतेषु सूर्यसुतात् ॥ ३ ॥ ज्ञात्केन्द्रत्रिसुतायाष्टगो गुरोर्व्ययायमृत्युकेन्द्रेषु ॥ त्रिचतुःसुतनवदशमसप्तमायगश्चन्द्रमाः शुक्रात् ॥ ४ ॥

सं०टी—चन्द्रो लग्नात् ३।६।११।१० एतेषु शुभः स्वात् स्वस्थानात् प्रथमसप्तमसहितेषु उपचयेषु ३।६।११।१०।१।७ एतेषु शुभः।कुजात्स्वनवधीसहितेषूपचयेषु ३।६।११।१०।२।९।५ एतेषु शुभः। सूर्यात्साष्टं स्मरगः ३।६।११।१०।८।७ एतेषु शुभः शनैश्चरात् त्रिषडायसुतेषु ३।६।११।५। एतेषु शुभः ॥ ३ ॥ बुधात् १।४।७।१०।३।५।११।८ एतेषु शुभः गुरोः १२।११।८।१।४।७।१० एतेषु शुभः। शुक्रात् ३।४।५।९।१०।७।११ एतेषु शुभः। इति चंद्रः ॥ ४ ॥

भाषार्थः—चन्द्रमाका अष्टकवर्ग चक्रसे जानना. जैसे चन्द्रमा ल-

असे उपचय ३।६।१०।११ स्थानमें शुभ जानना. ऐसेही श्लोकार्थ चक्रपरसे लगाना ॥ ३ ॥ ४ ॥

### भौमाष्टकवर्गः ।

भौमः स्वादायस्वाष्टकेन्द्रगरुयायषट्सुतेषु बुधात् ॥ जीवाद्दशायशत्रुव्ययेष्विनादुपचयसुतेषु ॥ ५ ॥

संटी०–भौमः स्वस्थानतः ११।२।८।१।४।७।१० एतेषु शुभः। बुधात् ३।११।६।५ एतेषु शुभः। जीवात् १०।११।६।१२। एतेषु शुभः। सूर्यादुपचयसुतेषु ३।६।११।१०।५ एतेषु शुभः ॥ ५ ॥

उदयादुपचयतनुषु त्रिषडायेष्विन्दुतः समो दशमः ॥ भृगुतोन्त्यषडष्टायेष्वसितात्केन्द्रायनववसुषु ॥ ६ ॥

भौमाष्टकवर्गाङ्काः ।

| मं | बु | बृ | शु | श | ल | सू | चं |
|---|---|---|---|---|---|---|---|
| १ | ३ | ६ | ६ | १ | १ | ३ | ३ |
| २ | ५ | १० | ८ | ४ | ३ | ५ | ६ |
| ४ | ६ | ११ | ११ | ७ | ६ | ६ | ११ |
| ७ | ११ | १२ | १२ | ८ | १० | १० | ० |
| ८ | ० | ० | ० | ९ | ११ | ११ | ० |
| १० | ० | ० | ० | १० | ० | ० | ० |
| ११ | ० | ० | ० | ११ | ० | ० | ० |

संटी०—भौमः लग्नात् ३।६।११।१०।१ एतेषु शुभः। इंदुतः ३।६।११ एतेषु शुभः। चन्द्राद्दशमे समः न शुभो नाप्यशुभः। शुक्रात् १२।६।८।११। एतेषु शुभः। शनैश्चरात् १।४।७।१०।११।९।८ एतेषु शुभः। इति भौमः ॥ ६ ॥

### बुधाष्टकवर्गः ।

सौम्योऽन्त्यषण्णवायात्मजेष्विनात् स्वात् त्रितनुदशयुतेषु ॥ चन्द्राद्विरिपुदशायाष्टसुखग-

तः सादिषु विलग्नात् ७ प्रथमसुखायद्विनिधनध-र्मेषु सितात् त्रिधीस-मेतेषु ॥ साशास्मरेषु सौ रारयोर्व्ययायरिपुवसु-षु गुरोः ॥ ८ ॥

| बुधाष्टकवर्गाङ्काः ॥ ५४ ॥ | | | | | | | |
|---|---|---|---|---|---|---|---|
| बु | बृ | शु | श | ल | सू | च | मं |
| १ | ६ | १ | १ | १ | ५ | २ | १ |
| ३ | ८ | २ | २ | २ | ६ | ४ | २ |
| ५ | ११ | ३ | ४ | ४ | ९ | ६ | ४ |
| ६ | १२ | ४ | ७ | ६ | ११ | ८ | ७ |
| ९ | ० | ५ | ८ | ८ | १२ | १० | ८ |
| १० | ० | ८ | ९ | १० | ० | ११ | ९ |
| ११ | ० | ९ | १० | ११ | ० | ० | १० |
| १२ | ० | ११ | ११ | ० | ० | ० | ११ |

सं॰टी॰—बुधः सूर्यात् १२।६।९।११।५ एतेषु शुभः। स्व-स्थानात् १२।६।९।११।५।३।१।१० एतेषु शुभः। चन्द्रात् २।६।१०।१२।८।४ एतेषु शुभः। लग्नात् १।२।६।१०।११।८।४ एतेषु शुभः ॥ ७ ॥ बुधः शुक्रात् १।४।११।९।८।२।३।५ एतेषु शुभः शनैश्चरात् १।४।११।२।८।९।३।५।१०।७ एतेषु शुभस्तथा भौमात् १।४।११।२।८।९।३।५।१०।७ एतेषु शुभः। जीवात् १२।११।६।८ एतेषु शुभः। इति बुधः ॥ ८ ॥

गुरोरष्टकवर्गः।

जीवो भौमात् व्ययाष्ट-केन्द्र गोऽर्कात्सधर्मस-हजेषु॥ स्वात् सत्रिकेषु शुक्रान्नवदशलाभस्वधी-रिपुषु ॥ ९ ॥ श-शिनः स्वरत्रिकोणार्थ-लाभगस्त्रिरिपुधीव्ययेषु यमात्॥नवदिक्सुखाद्य-धीस्वायशत्रुषु ज्ञात्सकामगो लग्नात् ॥ १० ॥

| गुरोरष्टकवर्गाङ्काः ॥ ५५ ॥ | | | | | | | |
|---|---|---|---|---|---|---|---|
| बृ | शु | श | ल | सू | चं | मं | बु |
| १ | २ | ३ | १ | १ | २ | १ | १ |
| २ | ५ | ५ | २ | २ | ५ | २ | २ |
| ३ | ६ | ६ | ४ | ३ | ७ | ४ | ४ |
| ४ | ९ | १२ | ५ | ४ | ९ | ७ | ५ |
| ७ | १० | ० | ६ | ७ | ११ | ८ | ६ |
| ८ | ११ | ० | ७ | ८ | ० | १० | ९ |
| १० | ० | ० | ९ | ९ | ० | ११ | १० |
| ११ | ० | ० | १०/११ | १०/११ | ० | ० | ११ |

सं०टी०—जीवो भौमात् २।११।८।१।४।७।१० एतेषु शुभः।सूर्यात् २।११।८।१।४।७।१०।९।३ एतेषु शुभः । स्वस्थानात् २।११।८।१।४।७।१०।३ एतेषु शुभः । शुक्रात् ९।१०।११।२।५।६ एतेषु शुभः ॥ ९ ॥ जीवः शशिनः ७।९।५।२।११ एतेषु शुभः । शनैश्चरात् ३।६।६।१२ एतेषु शुभः। बुधात् ९।९।१०।४।१।५।२।११।६ एतेषु शुभः। लग्नात् ९।१०।१०।४।१५।२।११।६।७ एतेषु शुभः।इति गुरुः१०॥

| शुक्राष्टकवर्गाङ्किकाः ॥ ५६ ॥ | | | | | | | |
|---|---|---|---|---|---|---|---|
| शुं | श | ल | सू | चं | मं | बु | बृ |
| १ | ३ | १ | ८ | १ | ३ | ३ | ५ |
| २ | ४ | २ | ११ | २ | ५ | ५ | ८ |
| ३ | ५ | ३ | १२ | ३ | ६ | ६ | ९ |
| ४ | ८ | ४ | ० | ४ | ९ | ९ | १० |
| ५ | ९ | ५ | ० | ५ | ११ | ११ | ११ |
| ८ | १० | ८ | ० | ८ | १२ | ० | ० |
| ९ | ११ | ९ | ० | ९ | ० | ० | ० |
| १० ११ | ० | ११ | ० | ११ १२ | ० | ० | ० |

## शुक्राष्टकवर्गः।

शुक्रो लग्नादासुतनवाष्टलाभेषु सव्ययश्चन्द्रात्॥ स्वात्सदिगसितात्त्रिसुखात्मजाष्टदिग्धर्मलाभेषु ॥ ११ ॥ वस्वन्त्यायेष्वर्कान्नवदिक्लाभाष्टधी स्थितो जीवात् ॥ ज्ञात्त्रिसुतनवाया रिष्वायसुतायोऽङ्कि-मेषु कुजात् ॥ १२ ॥

सं० टी०—शुक्रो लग्नात् १।२।३।४।५।९।११ एतेषु शुभः चंद्रात् १।२।३।४।५।९।८।११।१२ एतेषु शुभः. स्वात् स्वस्थानात् १।२।३।४।५।९।८।११।१२।१० एतेषु शुभः शनैश्चरात् ३।५।४।९।११।१०।८ एतेषु शुभः।। जीवात्९।१० एतेषु शुभः॥११॥शुक्रः सूर्यात् ८।१२।११ एतेषु शुभः। बुधात् ३।५।९।११।६ एतेषु शुभः। भौमात् ११।५।३।६।९।१२ एतेषु शुभः। इति शुक्रः ॥१२॥ ११।८।५ एतेषु शुभः।

शनेरष्टकवर्गः ।

स्वात्सौरिस्त्रिसुतायारिगः कुजादन्त्यकर्मसहितेषु ॥ स्वायाष्टकेन्द्रगोऽर्काच्छुक्रात्षष्ठान्त्यलाभेषु ॥ १३ ॥ त्रिषडायगः शशाङ्कादुदयात्ससुखाद्यकर्मगोऽथ गुरोः ॥ सुतषट्व्ययायगो ज्ञात् व्ययायरिपुदिङ्नवाष्टस्थः ॥ १४ ॥

शनेरष्टकवर्गाङ्काः ॥ ३८ ॥

| श | ल | सू | चं | मं | बु | बृ | शु |
|---|---|---|---|---|---|---|---|
| ३ | ३ | १ | ३ | ३ | ६ | ५ | ६ |
| ५ | ४ | २ | ६ | ५ | ८ | ६ | ११ |
| ६ | ६ | ४ | ११ | ६ | ९ | ११ | १२ |
| ११ | ९ | ७ | ० | १० | १० | १२ | ० |
| ० | १० | ८ | ० | ११ | ११ | ० | ० |
| ० | ११ | १० | ० | १२ | १२ | ० | ० |
| ० | ० | ११ | ० | ० | ० | ० | ० |

सं० टी०—शनिः स्वस्थानात् ३।५।११।६ ऐतेषु शुभः । कुजात् ३।५।११।६।१२।१० एतेषु शुभः । सूर्यात् २।११।८।१।४।७।१० एतेषु शुभः। शुक्रात् ६।१२।११ एतेषु शुभः ॥ १३ ॥ चंद्रात् ३।६।११ एतेषु शुभः। लग्नात् ३।६।११।४।१।१० एतेषु शुभः। जीवात् ५।६।११ १२ एतेषु शुभः । बुधात् १२।११।६।१०।८।९ एतेषु शुभः । इति शनिः ॥ १४ ॥

अष्टकवर्गफलम् ।

स्थानेष्वेतेषु शुभाः शेषेष्वहिता भवन्ति नेष्टानाम् ॥ अशुभशुभविशेषफलं ग्रहाः प्रयच्छन्ति चारगताः ॥ १५ ॥ क्लेशोऽर्थहानिर्व्यसनं समत्वं शश्वत्सुखं नित्यधनागमश्च ॥ सम्पत्प्रवृद्धिर्विपुलामलश्रीः प्रत्येकरेखाफलमामनन्ति ॥ १६ ॥

इति श्रीवराहमिहरकृते लघुजातकेऽष्टकवर्गाध्यायः एकादशः ॥ ११ ॥

सं० टी०—स्थानेष्वेतेषु शुभा इति । ते ग्रहाः एतेषु स्थानेषु पूर्वोक्तेषु हिताः शेषेषु अशुभाः । तत्र शुभाऽशुभविशेषमन्तरं कृत्वा यदवशिष्यते तद्वशात् शुभाऽशुभं वाच्यम् । तदेव ग्रहाः राशौ राशौ चारतः फलं प्रयच्छन्ति । एतदुक्तं भवति केन्द्रायाष्टद्विनवस्वित्यनेन पाठेन यान्युक्तानि तेषु शोभनं फलं शेषेषु अशोभनम् यानि शुभस्थानानि गदितानि तानि बिन्दूपलक्षितानि कार्याणि यानि अशुभानि तानि रेखोपलक्षितानि ततः इष्टानिष्टयोर्विशेषं कृत्वा यदधिकं भवति तत्फलं ज्ञेयम् । एवमेकत्र मिश्रितानि अष्टौ फलानि भवंति । तत्र शुभाऽशुभयोः साम्यं तत्र समत्वं ज्ञेयम् । यत्र बिन्दुष्टकं जातं तत्र शुभं पूर्णम् । यत्र षड् बिन्दवः तंत्र पादोनं फलम् । यत्र बिन्दुचतुष्टयं तत्रार्धम् । यत्र बिन्दुद्वयं तत्र पादफलज्ञेयम् । एवमष्टकवर्गः सर्वेषां करणीयः ॥ बिन्दोरधिके शुभदं रेखाऽधिकेनैव शोभनं भवति । विफलं गोचरगणितमष्टकवर्गेण निर्दिष्टम् ॥ १५ ॥ १६ ॥

इति श्रीलघुजातकटीकायामष्टकवर्गाध्यायो एकादशः ॥११॥

भाषार्थः—अब अष्टकवर्गका फल कहतेहैं—जिस २ ग्रहसे जो २ घर पूर्व कह आयेहैं उन घरोंमें ग्रह सब शुभ फल देतेहैं. और जो नहीं कहेहैं उनमें अशुभ फल देतेहैं. जिनमें शुभ कह आये हैं उनमें रेखा देना. अशुभकी जगह बिन्दु देना पश्चात् एक २ घरमें जितनी रेखा और बिन्दु आवें उनको रेखाके प्रमाण बिन्दुओंको घटादेना, घटानेपर ८ रेखा बचें तो उस जगे ग्रह पूर्ण शुभ फल देतेहैं. छे बचें तो तीन चरणसे फल देतेहैं. चार बचें तो आधा फल, दो बचें तो एकचरणासे फल देवेहैं. जो आठ बिन्दु बचें तो पूर्ण अशुभ फल जानना. छे बचें वह तीन चरणसे अशुभ जानना, चार बिन्दुसे आधा अशुभ अर्थात् शुभ अशुभ नहीं बराबर जानना ॥ जैसे सूर्याष्टकवर्गचक्रमें सूर्य मेषका सम, कर्कमें तीनचरणसे शुभ फल इसीप्रकार जानना ॥१५॥ अष्टकवर्गमें जो ग्रह जिस राशिपर हो और जितनी रेखा पावे उन रेखाओंमें प्रत्येक रेखाका फल लिखतेहैं—एक



१ रेखा हो तो क्लेश हो, दो २ रेखा हों तो अर्थहानि, तीन ३ रेखा हों तो व्यसन (विपत्) हो, चार ४ रेखा हों तो समत्व कहिये समान फल, पांच ५ रेखा हों तो निरन्तर सुख, छे रेखा हों तो नित्यही धनका आगम, सात रेखा हों तो सम्पदाकी वृद्धि, आठ रेखा हों तो बहुत निर्मल लक्ष्मी प्राप्त हो. यह प्रत्येक रेखाका फल जानना, ॥ १६ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां अष्टकवर्गाध्यायः एकादशः ॥ ११ ॥

## अथ प्रकीर्णाध्यायः ॥ १२ ॥ तत्रादौ चन्द्रयोगाः॥

रविवर्ज्यं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा ॥ उभयस्थितैर्दुरुधरा केमद्रुसंज्ञको योऽन्यः ॥ १ ॥

सं० टी०—अथ प्रकीर्णाध्यायं व्याख्यास्यामः । तत्रादौ चंद्रयोगप्रकरणं भवति । रविवर्जं सूर्यं वर्जयित्वा चंद्राद्द्वादशे स्थाने भौमबुधजीवसितसौराणामन्यतमो भवति तदा अनफानाम योगो भवति । अत्र रविवर्ज्यमित्युक्तं । तत्रादित्यो योगकर्तृकग्रहगणनया न गण्यते । अथ तेषामेव ग्रहाणां मध्ये कश्चिच्चन्द्राद् द्वितीयस्थाने भवति तदा सुनफानाम योगो भवति । अथ चंद्राद् द्वितीयद्वादशे स्थाने तएव ग्रहा भवंति तदा दुरुधरायोगः । यदा चन्द्राद्द्वितीयद्वादशयोः स्थानयोरुभयोरपि भौमादीनां मध्ये कश्चिन्न भवति तदा केमद्रुमयोगो भवति ॥ १ ॥

भाषार्थः—अब प्रकीर्णाध्याय कहतेहैं—तहां प्रथम चंद्रयोग लिखतेहैं—सूर्यको छोड़ चंद्रमासे बारहवें स्थान जो ग्रह हो तो अनफा योग कहिये, दूसरे घर हो तो सुनफा योग कहिये, और जो दूसरे बारहवें दोनोंमें ग्रह हों तो दुरुधरायोग कहिये तथा कोई ग्रह दूसरे बारहवें न हो तो केमद्रुम योग होताहै ॥ १ ॥

सच्छीलं विषयसुखान्वितं प्रभुं ख्यातियुक्तम-

नफायाम् ॥ सुनफायां धीधनकीर्तियुक्तमा-
त्मार्जितैश्वर्यम् ॥ २ ॥

सं० टी०—शोभनशीलं विषयसुखान्वितं इंद्रियसुखान्वितं प्रभुं समर्थं ख्यातियुक्तं कीर्तियुक्तं एवं विधमनफायां भवति। सुनफायां धी बुद्धिः धनं अर्थः कीर्तिः ख्यातिः एभिर्युक्तमात्मार्जितैश्वर्यं स्वयमर्जितार्थो भवति। एवंविधं सुनफायोगजातम् भवति ॥ २ ॥

भाषार्थः—अनफा सुनफा योगका फल कहतेहैं—सुन्दर शीलवान्, विषयसुखसे युक्त, अनेक मनुष्योंका प्रभु ( स्वामी ) हो, और कीर्तिवान् हो. यह अनफाका फल है, और सुनफायोगमें उत्पन्न हुआ बुद्धि, धन, कीर्ति, से युक्त हो और अपने पराक्रमसे द्रव्योपार्जन करे ॥ २ ॥

बहुभृत्यकुटुम्बारंभचित्तमुद्विग्नमपि च दौर्धरिके ॥ भृतकं दुःखितमधनं जातं केमद्रुमे विद्यात् ॥ ३ ॥

सं० टी०—अथ दुरुधराकेमद्रुमयोर्जातस्य स्वरूपमाह। बहुभृत्यं बहुकुटुंबं बहुकार्यारम्भं नित्योद्विग्नचित्तं एवं विधं दुरुधरायोगजातं जानीयात्। भृतकमिति। भृतकं कर्मकरं दुःखितं दुःखान्वितं अधनं दरिद्रम् एवंविधं केमद्रुमे जातं विद्यात् ॥ ३ ॥

भाषार्थः—अब दुरुधराव केमद्रुमयोगका फल कहतेहैं, दुरुधरा योगमें जन्म हो तो सेवक बहुत हों. कुटुंब बहुत हो. बहुत कार्यका आरंभ करनेवाला हो, चित्त उद्विग्न रहे अर्थात् मन खेदमें रहे, और केमद्रुममें जिसका जन्म हो वह सेवकोंका काम करनेवाला, दुखी, धनरहित, जानना ॥ ३ ॥

## योगकर्तृग्रहफलम् ।

भौमश्चौरश्चंडो महाधनो ज्ञानवान् बुधो निपुणः ॥ ऋद्धः शुक्रः सुखितो गुरुर्गुणाढ्यो नृपतिपूज्यः ॥ ४ ॥

सं०टी०—यदा सुनफानफादुरुधराणां भौमो योगकर्ता भवति तदा चौरश्चण्डश्च भवति। चण्डस्तीक्ष्णः। बुधश्चेत्तदा महाधनो ज्ञानवान् निपुणश्च। शुक्रश्चेत्तदा ऋद्धः ईश्वरः सुखी। गुरुश्चेत्तदा गुणाढ्यो राजपूज्यश्च ॥ ४ ॥

भाषार्थः—अब अनफादियोग करनेवाले ग्रहोंका फल कहतेहैं—जो मंगल अनफादियोग करनेवाला हो तो वह बड़ा चोर हो, क्रोधी हो, और बुध योगकर्ता हो तो धनी, ज्ञानवान्, और निपुण हो, शुक्र योगकर्ता हो तो धनी, सुखी हो, बृहस्पति योगकर्ता हो तो गुणसे युक्त और राजासे पूजित होय ॥ ४ ॥

बह्वारम्भः सौरिर्बहुभृत्यः पूजितो गुणैर्वृद्धः ॥ एषां गुणैः समगुणा ज्ञेया योगोद्भवाः पुरुषाः ॥ ५ ॥

सं०टी०—सौरिश्चेत्तदा बहुकार्यारंभी बहुभृत्यः बहुसेवकः पूजितो सर्वैः सेवितः गुणैर्वृद्धश्च। एषां गुणैरिति। एषां ग्रहाणां गुणैः समगुणा ज्ञेयाः। तत्र यदेव ग्रहस्य रूपमुक्तं तत्कृते अनफासुनफादुरुधरायोगे जातः पुरुषः तादृशो भवति। द्वाभ्यां कृते द्वयोर्गुणसम्बन्धं प्राप्नोति बहुभिः कृते बहुसम्बधमिति ॥ ५ ॥

इति चंद्रयोगप्रकरणम् ॥

भाषार्थः—जो शनि योगकर्ता हो तो बहुत कार्यका आरम्भ करनेवाला हो. और सेवक बहुत हों. और सबसे पूजित तथा गुणोंकरके बड़ा हो. इन ग्रहोंके गुणसमान योगसे उत्पन्न जो गुण है सो मनुष्यके तदनुकूल जानना ॥ ५ ॥

## अथ सूर्ययोगः।

सूर्याद्द्वितीयमृक्षं वेशिस्थानं प्रकीर्तितं यवनैः ॥
तच्चेष्टग्रहयुक्तं जन्मनि चेष्टासु च विलग्नम् ॥ ६ ॥

सं०टी०—यस्मिन् राशावादित्यो व्यवस्थितस्तस्माद्यो द्वितीयो राशिस्तस्य वेशीति संज्ञकं यावनैः प्रकीर्तितं कथितं वेशिस्थानं जन्मनीष्ट-

ग्रहयुक्तं प्रशस्तं चेष्टासु यात्रासु च विलग्नं तदेव वेशिस्थानं प्रशस्यिष्यते ॥ ६ ॥

भाषार्थः-अब सूर्ययोग कहतेहैं-कि जन्मसमय सूर्य जिस स्थानमें हो वहांसे दूसरे स्थानकी वेशिसंज्ञा यवनाचार्यकरके कथित है, तहां इष्ट कहिये शुभ ग्रह हो तो शुभफल कहिये और वही यात्राका लग्न कहिये ॥ ६ ॥

द्विग्रहयोगाः।

यन्त्रज्ञं पापरतं निपुणं क्रूरं च शस्त्रवृत्तिं च ॥
धातुज्ञं च क्रमशश्चन्द्रादिभिरन्वितः सूर्यः ॥७॥

इति सूर्यप्रकरणम् ॥

सं०टी०—अथ द्विग्रहयोगाः। तत्रादावादित्ये चंद्रादियुक्ते जातस्य स्वरूपमाह। चंद्राद्यर्कयोगः आदित्ये चंद्रमसा युक्ते जातं यंत्रज्ञं भवति। यंत्राणि शतघ्नीप्रभृतीनि जानाति। भौमेन पापरतं। बुधेन निपुणं कार्ये सूक्ष्मदृष्टिं। बृहस्पतिना क्रूरं। शुक्रेण शस्त्रवृत्तिं क्षात्रवृत्तिं। शनैश्चरेण धातुज्ञं सुवर्णादिज्ञम् ॥ ७ ॥

भाषार्थः-अब द्विग्रहयोगफल कहतेहैं-जो सूर्य चंद्रका योग हो तो यंत्रज्ञ कहिये यंत्रका जाननेवाला हो, सूर्यमंगलका योग हो तो पापरत हो, सूर्यबुधसे निपुण, सूर्यगुरुके योगसे क्रूर, सूर्यशुक्रके योगसे शस्त्रवृत्तिवाला हो, और सूर्यशनिके योगसे ताम्रादिधातुओंका जाननेवाला हो. यह सूर्यके साथ चन्द्रादि ग्रहोंके योगसे द्विग्रहयोगफल कहा ॥ ७ ॥

चन्द्रेऽङ्गारकपूर्वैः कूटज्ञं प्रसूतं कुलाभ्यधिकम् ॥
वस्त्रव्यवहारज्ञं क्रमेण पौनर्भवं चापि ॥ ८ ॥

सं०टी०—चन्द्रेऽङ्गारकादियुक्ते जातस्य स्वरूपमाह चन्द्रेऽङ्गारकेण युक्ते कूटज्ञः कुलकुशलकारी भवेत्। बुधेन युक्ते प्रसूतं वाक्यनिपुणं प्रियवादी भवेत्। जीवेन युक्तः कुलप्रसिद्धः भवेत्। शुक्रेण युक्ते वस्त्रविक्रयज्ञः भवेत्। शनैश्चरेण युक्ते पुनर्भूपुत्रः स्यात् ॥ ८ ॥

भावार्थः—चंद्रमा मंगलआदिसे युक्त हो उसका फल कहतेहैं–कि
जो चंद्रमा मंगलका योग हो तो कूटज्ञ कहिये बाजारकी वस्तुओंका बे-
चनेवाला हो, चंद्रमा बुधका योग हो तो प्रियवादी हो, चंद्रमा गुरुका
योग हो तो अपने कुलमें सबसे अधिक हो, चंद्रशुक्रका योग हो तो व-
स्त्रके व्यवहारको जाननेवाला हो, और बूटाबेल बनानेवाला हो, और श-
नैश्वरसे चंद्रमा युक्त हो तो पौनर्भव कहिये पुनर्भूका पुत्र हो ॥ ८ ॥

**मल्लो रक्षकः परदारसक्तो दुःखान्वितः कुजो-
ज्ञाद्यैः ॥ ज्ञो जीवाद्यैर्गीतज्ञं वाग्मिनं महेन्द्र-
जालज्ञम् ॥ ९ ॥**

सं०टी०—अङ्गारके बुधेन युक्ते जातो मल्लो भवति। जीवेन रक्ष-
कः। शुक्रेण परदाररतः। सौरेण दुःखान्वितो भवति। बुधे गुर्वादियुक्ते
जातस्य स्वरूपमाह। बुधे जीवेन युक्ते गीतज्ञो भवति। शुक्रेण वाग्मी
पण्डितो भवति। शनैश्चरेण युक्तो मायाज्ञः इन्द्रजालज्ञश्च भवति ॥९॥

भावार्थः—मंगल बुधादिके साथ हो उसका फल कहतेहैं–कि मंगल
बुधका योग हो तो मल्ल, ( पहलवान ) हो, मंगल बृहस्पति हो तो नग-
रका रक्षक हो, शुक्रसे युक्त हो तो परस्त्रीका सेवन करनेवाला हो, मंग-
लशनिका योग हो तो दुःखसे युक्त हो, अब बुधबृहस्पत्यादियुक्तका फल
कहतेहैं, कि बुध बृहस्पतिका योग हो तो गीतोंका जाननेवाला हो, बुध
शुक्रका योग हो तो अच्छा बोलनेवाला हो, बुधशनिका योग हो तो इन्द्र-
जालका जाननेवाला हो, ॥ ९ ॥

**जीवः सितेन बहुगुणमसितेन समन्वितोऽत्र
घटकारम् ॥ स्त्रीधनं मन्देन सितस्त्रिभिरप्येवं
फलानि वदेत् ॥ १० ॥**

सं०टी०—जीवे सितादियुक्ते जातस्य स्वरूपमाह। जीवः सितेन युतो

१ जो स्त्री एक पतिके नष्ट होजानेपर दूसरे पतिको ग्रहण करे उसे "पुनर्भू" कहतेहैं.

जातं बहुगुणं करोति । शनैश्चरेण समन्वितो यदा जीवः तस्मिन् योगे जातं घटकारं कुंभकारं करोति । शुक्रशनैश्चरयोगे जातं स्त्रीधनं करोति । स्त्रीसकाशाद्धनमाप्नोति । अन्ये च स्त्रियो वल्लभत्वाद्धनं प्रयच्छंति । इति स्त्रीणां वल्लभत्वाद्धनागमइत्यर्थः । त्रिभिरप्येवं फलानि वदेत् । यदा ग्रहास्त्रयएव राशौ भवंति तदा द्विग्रहयोगवत् त्रयस्यापि फलं वक्तव्यम् । यदार्कचंद्रांङ्गारका एकराशिगतास्तदाऽऽदित्यचन्द्रयोगवत्फलमुक्तं आदित्याङ्गारकयोगे च यत्फलमुक्तं तत्फलंत्रयमपि वाच्यम् । एवं एथासम्भवं ग्रहत्रयस्य फलं वाच्यम् ॥ १० ॥

इति द्विग्रहत्रिग्रहयोगप्रकरणम्

भाषार्थः—जो बृहस्पति शुक्रसे युक्त हो तो बहुत गुणोंका जानने वाला हो, और शुक्र शनिका योग हो तो स्त्रीकरके धनप्राप्ति हो, अब त्रिग्रहयोगका फल कहतेहैं-सो इस क्रमसे फल कहे, जैसे सूर्य, चन्द्रमा, मंगल एकस्थानमें हों तो सूर्यचंद्रयोगसे जो फल कहा है सो जानना, और सूर्यमंगलके योगमें कहा है सो जानना. इसीप्रकार त्रिग्रहका फल पूर्वोक्त द्विग्रहका फल कहाहै सो संबंधसे कहना ॥ १० ॥

## अथ प्रव्रज्यायोगः ॥

**चतुरादिभिरेकस्थैः प्रव्रज्यां स्वां ग्रहः करोति बली ॥ बहुवीर्यैस्तावन्त्यः प्रथमा वीर्याधिकस्यैव ॥ ११ ॥**

सं०टी०—अथ चतुर्ग्रहयोगप्रकरणं । यस्य जन्मनि ग्रहाश्चत्वार एकराशिगता भवंति स प्रव्रज्यामाप्नोति । तेषामेकराशिगतानां मध्ये यो बली भवति स स्वां प्रव्रज्यां करोति ग्रहः । बहुवीर्यैरिति । यदि बहवो ग्रहा बलिनो भवंति तदा बव्ह्यः प्रव्रज्याः बहूनां संबंधिनीः प्रव्रज्याः प्राप्नोति । एतेषां ग्रहाणां मध्ये योऽतिबली पूर्वं तस्यैव प्रव्रज्या वक्तव्या । अन्येषां बलं विचार्य उत्तरोत्तरं प्रव्रज्या वक्तव्या । चतुरादिष्वेकस्थेषु यदि कश्चिद्ग्रहो न बली भवति तदा जातस्य प्रव्रज्या नैव वक्तव्या ॥ ११ ॥

भाषार्थः—अब प्रव्रज्यायोग कहतेहैं-जिसके जन्मसमयमें एक घरमें चार वा पांच वा छे सात ग्रह पड़े हों तो जो ग्रह बली हो सो अपनी

प्रव्रज्या दे और जितने बली हों सो अपनी २ प्रव्रज्या दें. उनमें जो अ-
धिक बली हो प्रथम वह अपनी प्रव्रज्या देवेहै. ॥ ११ ॥

**तापसवृद्धश्रावकरक्तपटाजीविभिक्षुचरकाणाम् ॥ निर्ग्रन्थानां चार्कात् पराजितैः प्रच्युतिर्व-लिभिः ॥ १२ ॥ "वाणप्रस्थोऽथ कापाली बौद्धः स्यादेकदंडिनः ॥ त्रिदण्डी योगिनो नग्नः प्रव्रज्याऽर्कादितः क्रमात्" ॥ १३ ॥**

सं०टी०—तत्र न ज्ञायते कस्य का प्रव्रज्यात दर्थमाह। चतुरादीनामेक-स्थानां मध्यादर्के बलवति तापसो भवति तापसो वानप्रस्थः। चन्द्रे बलिनि वृद्धः श्रावकः कापालिकः। भौमे बलिनि रक्तपटः। बुधे आजीवी एक-दण्डी। गुरौ बलवति भिक्षुः त्रिदण्डी। शुक्रे बलिनि चरकः चक्रधरः। सौरे बलवति निर्ग्रन्थो नग्नः क्षपणकः प्रावरणरहित इत्यर्थः। अर्कादा-रभ्य क्रमेण पराजितैः प्रच्युतिबलिभिरिति। चतुर्णामेकस्थानां योबली ग्रहः स चेत् ग्रहयुद्धेऽन्येन ग्रहेण पराजितो भवति तदा ग्रहोक्तप्रव्रजितो भूत्वा पुनस्तां त्यजति। एवं बहुषु बलवत्सु पराजितेषु बह्वीष्वपि प्रव्रज्यासु अवस्थितस्तास्त्यजति ॥ १२ ॥ १३ ॥

भाषार्थः—अब सूर्यादि ग्रहोंकी प्रव्रज्या कहतेहैं. प्रव्रज्याकारक ग्र-होंमें जो सूर्य बली हो तो तापस हो, चन्द्रमा हो तो वृद्धश्रावक (कपाली) हो, मंगल हो तो गेरूके रँगे वस्त्रोंका पहिरनेवाला हो, बुध हो तो आजीवी (एकदंडी) हो, बृहस्पति हों तो यती हो. शुक्र हो तो चक्रकर कहिये भ्रमण करनेवाला योगियोंके समान हो, शनि हो तो निर्ग्रंथ (नग्न) हो, जो प्रव्रज्या देनेवाले ग्रह युद्धमें हारे हों तो वह प्रव्रज्याको ग्रहणकरके त्याग देवे ॥ १२ ॥ अन्यभी प्रव्रज्या कहतेहैं–कि सूर्य प्रव्रज्याकारक हो तो वाणप्रस्थ, चंद्रमा हो तो कापाली, मंगल हो तो बौद्धस्वरूप, बुध हो तो एकदंडी, गुरु हो तो त्रिदंडी, इस क्रमसे सूर्यादि ग्रहोंकी प्रव्रज्या है सो जानना ॥ १३ ॥

**दिनकरलुप्तमयूखैरदीक्षिता भक्तिवादिनस्ते-**

षाम् ॥ याचितदीक्षावलिभिः पराजितैरन्यदृष्टैर्वा ॥ १४ ॥ चतुर्ग्रहैरेकगतैश्च संस्थैर्धीधर्मदुश्चिक्यतनुस्थितैर्वा ॥ दासीषु जातः क्षितिपालतुल्यो भवेन्नरो भूपतिरन्तकोशी ॥१५॥

इति श्रीवराहमिहरविरचिते लघुजातके प्रकीर्णाध्यायो द्वादशः ॥ १२ ॥

सं०टी०—अत्रैव विशेषमाह-चतुरादीनामेकस्थानानां यावंतो बलिनो ग्रहास्तावन्तः प्रव्रज्यादायकास्तत्रापि बलिनां मध्ये यावंतो रविलुप्तकिरणा अस्तमितास्तावंतः स्वां स्वांप्रव्रज्यां न प्रयच्छंति किंतु ग्रहप्रव्रज्या प्रव्रजितानां मध्ये अभक्तिं प्रयच्छंति । तत्र रविलुप्तकिरणोऽस्तमयो यस्मिन्नेवराशिगतेऽर्केण संयुक्तः अस्तमितो भवति पृथक्राशिनापि युक्तः अस्तमितो भवति । याचितदीक्षा इति । चतुरादीनामेकस्थानां बली ग्रहः समागमेऽन्यने ग्रहेण निर्जितोऽन्येन च दृश्यते तदा प्रव्रज्यां याचमानोऽपि नाप्नोति । पूर्वोक्तं बलिभिः पराजितैः प्रच्युतैस्तदाऽन्यदृष्टैर्वेति विशेषणम् । वा शब्दो चशब्दस्यार्थे ॥ १४ ॥ १५ ॥

भाषार्थः—एकराशिमें चार ग्रह स्थित हों तो प्रव्रज्याकारक होतेहैं-उनमें जो ग्रह सूर्यकिरणकरके अस्त हो वह अपनी प्रव्रज्या नहीं देता किंतु अपनी प्रव्रज्यामें अभक्ति देवेहै और युद्धमें पराजित बली अन्यग्रहसे दृष्ट हो तो वह दीक्षाकी याचना करे परंतु प्राप्त होय नहीं ॥१४॥ जो चार ग्रह एक स्थानमें ५।९।३।१ इन स्थानोंमें स्थित हों तो दासीमें भी उत्पन्न मनुष्य बहुत कोश ( खजाना ) से युक्त राजाके तुल्य होवै ॥ १४ ॥ १५ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां प्रकीर्णाध्यायो द्वादशः ॥ १२ ॥

## अथ राशिशीलाध्यायः ॥ १३ ॥

अस्थिरविभूतिमित्रं चलमटनं स्खलितनि-

यममपि चरभे ॥ स्थिरभे तद्विपरीतं क्षमा-
न्वितं दीर्घसूत्रं च ॥ १ ॥

सं०टी०—अथ राशिशीलप्रकरणं-अस्थिरविभूतिं अनियतविभूतिं अस्थिरमित्रं चंचलं कर्मस्वनवस्थितं अटनं परिभ्रमणशीलं स्खलितनियमं चलितव्रतं एवं विधं चरराशौ स्थिते चंद्रे जातं भवति। स्थिरभे तद्विपरीतमिति। स्थिरविभूतिं स्थिरमित्रं अचलं नाटनं नो स्खलितनियमं न केवलमेतत्क्षमान्वितं दीर्घसूत्रं चिरेण कार्यानुष्ठानं एवंविधं स्थिरराशौ चंद्रे जातं भवति ॥ १ ॥

भाषार्थः—अब राशिशीलाध्याय कहतेहैं-कि जिसके जन्मसमय चन्द्रमा चरराशिमें हो उसका धन अस्थिर कहिये स्थिर न रहे. और किसीसे मित्रताभी स्थिर न रहे, चपल हो, बहुत घूमनेवाला हो, आचार चलित हो, और जो स्थिर राशिमें चन्द्रमा हो तो इस्से विपरीत फल कहना. अर्थात् धन मित्रता स्थिर रहे, सीधा स्वभाव और स्थिर स्थानवाला तथा आचारयुक्त होवे और कृपालु, दीर्घसूत्री अर्थात् विलंबसे कार्य करनेवाला होवे ॥ १ ॥

द्विशरीरे त्यागयुतं कृतज्ञमुत्साहिते विविध-
चेष्टम् ॥ ग्राम्यारण्यजलोद्भवराशिषु जाता
भवन्ति तच्छीलाः ॥ २ ॥

सं०टी०-द्विशरीरइति।त्यागयुक्तम्। दातारं कृतज्ञं प्रसिद्धं उत्साहितमुत्थानशीलं विविधचेष्टमनेकक्रियाकारिणं एवं विधं द्विस्वभावराशौ चंद्रे विद्यात्। ग्राम्यारण्येति। ग्राम्यराशयो मिथुनकन्यातुलाकुंभाः धन्विपूर्वार्द्धं एतेषामन्यतमस्थे चंद्रमसि जाता ग्रामशीला भवंति ग्रामशीला ग्रामप्रिया अरण्यसलिलभीरवः। अरण्या मेषवृषसिंहाः धनुः पश्चिमार्धं मकरपूर्वार्द्धं अत्र जाता अरण्यप्रिया भवंति ग्रामसलिलभीरवश्च। जलोद्भवाः कर्कमीनमकरांत्यभागा एतेषामन्यतमस्थे चंद्रमसि जाता जलप्रिया भवंति। ग्राम्यारण्यभीरवश्च। वृश्चिकस्थे चंद्रमसि जाता ग्राम्यारण्यशीला भवंति ॥ २ ॥

इति राशिशीलप्रकरणम्।

भाषार्थः—जो चंद्रमा द्विःस्वभाव राशिमें हो तो त्यागी हो, कृतज्ञ हो, उत्साही हो, अनेक प्रकारकी चेष्टा करनेवाला हो, और मिथुन, कन्या, तुला, धनका पूर्वार्ध इनमेंसे किसीमें चन्द्रमा हो तो उसको ग्राम अच्छा मालूम हो, और अरण्यराशि जो है सिंह, मकरका पूर्वार्ध, इनमें चंद्रमा हो तो वनमें चित्त अधिक लगे, और जलोद्भवराशिमें जो चंद्रमा हो अर्थात् कर्क, मीन व मकरके परार्धमें हो तो जलमें उसको अच्छा लगे, और ग्रामारण्य अर्थात् वृश्चिक राशिमें जो चंद्रमा हो तो ग्राम, वन दोनोंमें अच्छा लगे ॥ २ ॥

## दृष्टिफलम् ।

**क्षेत्राधिपसन्दृष्टे शशिनि नृपस्तत्सुहृद्भिरपि धनवान् ॥ द्रेष्काणांशकपैर्वा प्रायः सौम्यैः शुभं नाऽन्यैः ॥ ३ ॥**

सं० टी०—अथ दृष्टिफलं । यस्मिन् राशौ स्थितः चंद्रः तद्राशीश्वरेण दृष्टश्चन्द्रस्तत्कालजातः पुमान् राजा स्यात् । अथ चंद्राक्रांतराशिस्तस्याधिपमित्रेण दृष्टे चंद्रे संजातो धनवान् भवति । अर्थादेवं शत्रुक्षेत्राधिपशत्रुणा दृष्टे चंद्रे दरिद्रो भवति ।: क्षेत्राधिपमध्यदृष्टिर्निष्फला भवति । द्रेष्काणांशकपैरिति । यस्मिन्द्रेष्काणे चंद्रो व्यवस्थितः तस्य द्रेष्काणस्य स्वामिना दृष्टे जातो धनी भवति । अत्रांशकग्रहणे नवांशकेति नवांशकग्रहणं । यस्मिन्नवांशे द्वादशांशे त्रिंशांशे स्थिते चंद्रे तेषां स्वामिभिश्च दृष्टे जातो धनी भवति । अर्थादेव द्रेष्काणांशस्वामी शत्रुभिर्दृष्टेचंद्रे निर्धन इति । तन्मध्यदृष्टिर्निष्फलप्राया । सौम्यैरिति । क्षेत्राधिपो द्रेष्काणांशकपतिश्च यदि शुभग्रहो भवति तदा शुभकृद् भवति । अथाशुभोपि शुभकृत् किंतु प्रायोग्रहणादशुभोपि फलदो भवति । पापग्रहः किंचित्फलदः । यस्माद्बृहज्जातके पापानामपि क्षेत्रपानां दृष्टिफलं शुभमुक्तं न केवलं यावदन्येश्वरः स भवति ॥ ३ ॥ इतिदृष्टिफ०प्र० ॥ ३ ॥

भाषार्थः—अब दृष्टिफल कहतेहैं-कि जन्मसमय चन्द्रमा जिस राशिमें हो उस राशिका स्वामी चंद्रमाको देखता हो तो वह मनुष्य राजा

हो. अथवा चंद्रमासे मित्रता हो और चंद्रमाको देखता हो तो धनवान् हो, तथा उस राशिके स्वामीके शत्रुसे दृष्ट हो तो दरिद्री हो, और जहां कहीं चंद्रमा हो, जिसके द्रेष्काणमें हो उस द्रेष्काणका जो स्वामी है सो चंद्रमाको देखता हो तो वह धनी हो, और चंद्रमा जिसके नवांशमें हो उस नवांशका स्वामी चंद्रमाको देखता हो तो वह धनी हो. एवं होरा, त्रिंशांश, द्वादशांश, मेंभी जानना, बहुधा शुभग्रहकी दृष्टिसे शुभ फल होवैहै. और पापग्रहकी दृष्टिसे शुभ नहीं जानना ॥ ३ ॥

भावफलम् ।

पुष्णंति शुभा भावा मूर्त्यादीन् घ्नन्ति संस्थिताः पापाः ॥ सौम्याः षष्ठेऽरिघ्नाः सर्वेऽरिष्टा व्ययाष्टमगाः ॥ ४ ॥

सं०टी०—भावप्रकरणं चाह। लग्नादारभ्य तन्वादयो भावास्तत्र यस्मिन् भावे शुभग्रहाः व्यवस्थिताः तं भावंपुष्णंति वृद्धिं कुर्वंति। यस्मिन् भावे पापग्रहा व्यवस्थितास्तद्भावहानिकराः सौम्याः षष्ठेऽरिघ्नाः सौम्याः षष्ठस्थानस्थाः शत्रुनाशकराः भवंति पापा अवश्यमेवेति सर्वे नेष्टा व्ययाष्टमगाः व्ययस्थाः सौम्या पापाश्च व्ययवृद्धिं कुर्वंति।एवमष्टमस्थाः पापाः सौम्याश्च मृत्कवृद्धिं कुर्वन्ति षष्ठग्रहणमत्रोपचयस्थानोपलक्षणार्थं तेन तृतीयस्थाः सौम्याः पापाश्च सहजवृद्धिं कुर्वन्ति दशमस्थाः सौम्याः पापाश्च कर्मवृद्धिं कुर्वंति। यदुक्तं उपचयवर्ज्यं सौम्यैर्यत्तत्पापैर्विपर्यस्तम् ॥ ४ ॥

भाषार्थः—अब संक्षेपसे भावफल कहतेहैं—कि तन्वादिक भावोंमें जो शुभग्रह हों तो उन भावोंकी पुष्टि करतेहैं. और पापग्रह हों तो उनको नाश करैहैं. और छठे स्थान शुभग्रह हों तो शत्रुका नाश करें तथा बारहवें आठवें सब ग्रह अरिष्ट दें ॥ ४ ॥

चन्द्रे लग्नगते फलम् ।

कर्किवृषाजोपगते चन्द्रे लग्ने धनी सुरूपश्च ॥
विकलाङ्गजड़दरिद्राः शेषेषु विशेषतः कृष्णे ॥ ५ ॥

सं०टी—चंद्रमसो लग्नगतस्य फलमाह कर्किराशौ लग्नगते वृषे मेषे च लग्नगते तत्स्थे चंद्रे जातो धनी सुरूपश्च कर्कवृषमेषान् वर्जयित्वा शेषराशौ लग्नगते चंद्रे कृष्णपक्षे विशेषतो अत्यर्थं विकलांगजडदरिद्राणां जन्म भवति ॥ ५ ॥

भाषार्थः—अब लग्नगत चंद्रका फल कहतेहैं-जो कर्क, वृष, मेष राशिमें होकर चंद्रमा लग्नमें हो तो वह बालक धनी और स्वरूपवाला होवे, तथा इन राशियोंके अतिरिक्त अन्य राशियोंमें स्थित चंद्रमा लग्नमें हो और कृष्णपक्ष हो तो विशेषकरके बिकलशरीर और जड़बुद्धिवाला और दरिद्री होवै ॥ ५ ॥

सूर्ये लग्नगते फलम् ।

विकलेक्षणोऽर्कलग्ने तैमिरिकोऽजे स्वभे तु रात्र्यन्धः ॥ बुद्बुददृष्टिः कर्किणि काणो व्ययगे शशाङ्के वा ॥ ६ ॥

सं० टी०—अर्कस्य लग्नगतस्य चंद्रार्कयोश्च लग्नात् द्वादशस्थयोर्विशेषमाह मेषसिंहकर्कटान् वर्जयित्वाऽन्यस्मिन् राशौ लग्नगते तस्मिन् चार्के स्थिते विकलेक्षणो भवति मेषराशौ लग्नगते तत्रैव चार्के स्थिते जातस्तैमिरिको भवति तिमिराहतदृष्टिः सिंहे लग्नगते तत्र चैवार्के स्थिते जातो रात्र्यंधो भवति कर्किणि लग्नगते तत्रैव चार्के स्थिते जातो बुद्बुददृष्टिर्भवति पुष्पिताक्षः काणो व्ययगे शशांके वा लग्नगते द्वादशेऽर्के जातः काणो भवति चंद्रे वा द्वादशे काणः यद्यपि सामान्येनोक्तं तथापि आदित्ये व्ययगते दक्षिणाक्षिकाणः चंद्रे व्ययगते वामाक्षिकाणः। उक्तं च व्ययगतश्चंद्रो वामं हिनस्त्यपरं रविः॥६॥

भाषार्थः—अब सूर्यका लग्नगत फल कहतेहैं—जो सूर्य लग्नमें हो तो मनुष्य विकलनेत्र अर्थात् हीनदृष्टिवाला हो, और जो मेषका सूर्य लग्नमें हो तो नेत्रतिमिररोगसे युक्त हो, और जो सूर्य अपनी राशि कहिये सिंहके सूर्य लग्नमें हों तो रतौंधीसे युक्त होवे, तथा जो सूर्य कर्कलग्नमें हो तो बुद्बुददृष्टि ( फूले नेत्र ) वाला हो, जो सूर्य बारहवें हो तो दक्षिणनेत्रसे काणा होय, चन्द्रमा बारहवें हो तो बायां नेत्र काणा होवै ॥ ६ ॥

भावशुभाशुभफलम् ।

इष्टं पादविवृद्ध्या मित्रस्वगृहत्रिकोणतुङ्गेषु ॥
रिपुभेऽल्पं फलमर्कोपगतस्य पापं शुभं नैव ॥७॥

इति श्रीवराहमिहरकृते लघुजातके राशिशी-
लाध्यायस्त्रयोदशः ॥ १३ ॥

सं० टी—भावफलं । तद्द्विविधं शुभमशुभं च तत्र यद्भावफलं शुभं तस्य फलस्य मित्रक्षेत्रस्थो ग्रहः पादचतुर्थांशं प्रयच्छति स्वगृहस्थोऽर्धं त्रिकोणस्थः । पादहीनं तुंगोच्चस्थः सर्वं रिपुभेल्पमिति रिपुक्षेत्रस्थः पादादप्यल्पं अर्कोपगतोऽस्तंगतो न किंचिदपि नीचस्थश्च एवं शुभफलं प्रयच्छंति । पापफलमेवं तत्र पापस्य फलस्य शुभफलेन व्याक्षेपः तत्रास्तमितो नीचस्थश्चाशुभं संपूर्णं ददाति शत्रुक्षेत्रस्थः पादोनं मित्रक्षेत्रस्थोऽर्द्धं स्वगृहस्थः पादं त्रिकोणस्थः पादादल्पं उच्चस्थानस्थो न किंचिदपि ॥ ७ ॥

इति भावप्रकरणम् ॥

भाषार्थः—अब ग्रहोंका भावफल शुभाशुभ कहतेहैं—जो ग्रह मित्रके घरमें है वह एकचरणसे, तथा जो अपनी राशिमें है सो दो चरणसे, तथा जो ग्रह अपने त्रिकोणमें है वह तीन चरणसे, जो अपने उच्चमें है वह पूर्ण फल देताहै, और जो ग्रह अपने शत्रुके घरमें हो वह बहुत थोड़ा फल करैहै, तथा जो ग्रह सूर्यके साथ ( अस्तंगत ) हो अथवा नीचराशिमें हो वह कुछ फल नहीं देताहै. मूलश्लोकमें इष्टपद है इससे अनिष्टफल विपरीत जानना, जो ग्रह अस्त हो, नीचराशिमें हो, वह अशुभफल पूर्ण जानना, तथा जो ग्रह शत्रुघरमें हो वह तीनचरणसे अशुभफल देताहै, जो मित्रके घरमें है वह आधा फल देवैहै, तथा जो अपने घरमें है, वह एक चरणसे, जो त्रिकोणमें हो वह अनिष्टफल आधे चरणसे देवैहै, तथा जो ग्रह उच्चमें है वह अनिष्टफल कुछ नहीं देवैहै ॥ ७ ॥

इति श्रीपण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीका-
यां राशिशीलाध्यायस्त्रयोदशः ॥ १३ ॥

## अथाश्रयाध्यायः ॥ १४ ॥

### मेषादिनवांशफलम् ।

**तस्करभोक्तृविचक्षणधनिनृपतिनपुंसकाऽभयदरिद्राः ॥ खलपापोग्रोत्कृष्टा मेषादीनां नवांशभवाः ॥ १ ॥**

सं० टी—अथाश्रयप्रकरणं चाह । तत्रादावेव नवांशजातस्य स्वरूपमाह । यस्मिन् यस्मिन् राशौ लग्नगते मेषनवांशे जातस्तस्करो भवति वृषनवांशके जातो भोक्ता मिथुननवांशके जातो विचक्षणः। कर्कनवांशके जातो धनी सिंहनवांशके जातो राजा कन्यानवांशके जातो नपुंसकः तुलानवांशके जातः शूरः। वृश्चिकनवांशे जातो दरिद्रो भवति। धन्विनवांशे जातः खलो दुष्टो भवति मकरनवांशे जातः पापो भवति कुंभनवांशे जात उग्रो भवति क्रूर इत्यर्थः। मीननवांशे जातः गत्कृष्टो भवति ॥ १ ॥

भाषार्थः—अब आश्रयाध्याय लिखतेहैं—तहां प्रथम, मेषादिनवांशाका फल लिखतेहैं, जो जन्मलग्नमें मेषका नवांशा हो, तो चोर होताहै. वृषकेनवांशामें जन्म हो तो भोक्ता, मिथुनका हो तो विचक्षण, ( बुद्धिवान ) हो, कर्कका नवांशा हो तो धनी, सिंहके नवांशामें जन्मनेवाला राजा, कन्याके नवांशामें जन्म हो तो नपुंसक, तुलाके नवांशावाला अभय ( शूर ) हो, वृश्चिकके नवांशामें जन्म हो तो दरिद्री ( धनहीन ) होवै, धनके नवांशामें खल ( दुष्टस्वभाव ) हो, मकरके नवांशामें पापी होताहै, कुंभके नवांशामें क्रूर, मीनके नवांशामें श्रेष्ठ होताहै, यह मेषादि नवांशाओंमें उत्पन्नका फल है॥ १ ॥

### स्वक्षेत्रगतग्रहफलम् ।

**कुलतुल्यकुलाधिकबन्धुमान्यधनिभोगिनृपसमनरेन्द्राः ॥ स्वर्क्षगतैकविवृद्ध्या किञ्चिन्न्यूनाः सुहृद्गृहगैः ॥ २ ॥**

सं०टी०—एकविवृद्ध्या स्वक्षेत्रगतैर्गृहैर्जातस्य स्वरूपमाह। यस्मिन् कस्मिन् राशौ ग्रहे स्वक्षेत्रगते जातः स्वकुलसदृशो भवति द्वयोः स्वक्षेत्रयोः स्वकुलाधिकस्त्रिषु बंधुमान्यः। चतुर्षु धनी पंचसु भोगी षट्सु नृपसमः सप्तसु राजा किंचिन्न्यूनः सुहृद्गृहगैः एकस्मिन् भावे मित्रक्षेत्रगते ग्रहे परविभवोपजीवी द्वयोः सुहृत् विभवोपजीवी त्रिषु जातिविभवोपजीवी चतुर्षु बंधुषु विभवोपजीवी पंचसु गणस्वामी षट्सु बलस्वामी सप्तसु राजा उक्तं च परिविभवसुहृत्स्वबंधुपोष्यगणपबलेशा नृपाश्च मित्रभेषु ॥ २ ॥

भाषार्थः—अब अपनी राशिमें स्थित ग्रहोंका फल लिखतेहैं—जिसके जन्मसमय एक ग्रह अपनी राशिमें हो वह अपने कुलके समान, दो २ ग्रह उच्चके हों तो कुलसे अधिक, तीन ३ ग्रह स्वराशिगत हों तो बन्धुमान्य हो, ४ चार ग्रह अपने घरके हों तो धनी, पांच ५ ग्रह स्वग्रही हों तो भोगी हो, छे ६ ग्रह अपनी राशिमें हों तो राजाके बराबर हो, सात ७ ग्रह स्वग्रही हों तो राजा हो, अपनी राशिमें स्थित ग्रह एक २ ग्रह बढनेसे जो फल होता है सो कहा, और मित्रके घरमें ग्रहोंका फल कुछ न्यून कहना, "उक्तं च परिविभवसुहृत्स्वबन्धुपोष्यगणपबलेशानृपाश्च मित्रभेषु" अर्थः—जो एक ग्रह मित्रका हो वह पराये धनसे जीवै, २ ग्रह मित्रके हों वह मित्रोंके धनसे जीवै, ३ ग्रह मित्रक्षेत्री हों तो अपने बंधुओंके धनसे जीवै, ४ ग्रह मित्रक्षेत्री हों तो अपने भाईके धनसे जीवै, ५ ग्रह मित्रक्षेत्री हों तो वह बहुत मनुष्योंका स्वामी हो, ६ ग्रह मित्रक्षेत्री हों तो सेनाका स्वामी हो, ७ ग्रह मित्रक्षेत्री हों तो राजा हो॥२॥

## उच्चगतग्रहफलम् ।

**त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवा भवन्ति राजानः ॥ पञ्चादिभिरन्यकुलोद्भवाश्च तद्वत्त्रिकोणगतैः ॥ ३ ॥**

सं० टी०—यस्य जन्मनि त्रयो ग्रहाः उच्चगता भवंति स यदि राजवंशजातस्तदा राजा भवति। यस्य चत्वारः सराजवंशजो राजा भवति यस्य जन्मनि पंचग्रहा उच्चराशिगता भवंति स यदि अन्यकुलजातोऽपि राजा भवति यस्य षट्ग्रहाः स अन्यकुलजातो राजा भवति यस्य

सप्त ग्रहाः सोऽपि एकेनोच्चगतेन द्वाभ्यां च राजवंशजो राजा भवति। एकेन द्वाभ्यां त्रिचतुर्भिर्वान्यवंशजो राजा न भवति किं तर्हि धनी भवति तत्रापि यथा यथोच्चस्था ग्रहा भवंति तथा तथाधिको धनी तद्वत्त्रिकोणगतैरपि त्रिचतुर्भिर्मूलत्रिकोणगतैराजवंशजो राजा भवति पंचषट्सप्तभिर्मूलत्रिकोणगतैरन्यवंशजोऽपि राजा भवति । अल्पैर्मूलत्रिकोणगैर्धनी भवति । यथा यथा बहवो मूलत्रिकोणस्था भवंति तथा तथाऽधिको धनी भवति ॥ ३ ॥

भाषार्थः—अब तीन ग्रहोंसे लेके ग्रहोंका उच्चफल वर्णन करतेहैं–जिसके तीन ग्रह उच्चके हों तो वह राजवंशमें उत्पन्न मनुष्य राजा होवै और पांच छे अथवा सात ग्रह उच्चके हों तो अन्य कुलमें उत्पन्न मनुष्य राजा होवै, ऐसेही मूलत्रिकोणगत ग्रहोंका फल जानना, जैसे तीन चार ग्रह मलत्रिकोणमें हों तो राजपुत्र राजा होवैं अन्यकुलस्थ पांच अथवा अधिक ग्रह अपने मूलत्रिकोणमें हों तो राजा होवैं ॥ ३ ॥

## नीचगतग्रहफलम् ।

**निर्धनदुःखितमूढव्याधितवन्धवाभितप्तवधभाजः ॥ एकोत्तरपरिवृद्ध्या नीचगतैः शत्रुगृहगैर्वा ॥ ४ ॥**

सं० टी०—अथैकादिभिर्नीचगतैर्ग्रहैः जातस्य स्वरूपमाह । यस्मिन् कस्मिन् राशौ एकस्मिन् ग्रहे नीचगते शत्रुक्षेत्रगते जातो निर्धनो भवति द्वाभ्यां नीचगताभ्यां दुःखितः त्रिभिर्मूढो विचेताः चतुर्भिर्व्याधितः पंचभिर्वन्ध्यः षड्भिरभितप्तवाक् सप्तभिर्वधभाग् भवति ॥४॥

इत्याश्रय प्रकरणम् ॥

भाषार्थः—अब एक ग्रहसे लेके सब ग्रहोंका नीचघरमें तथा शत्रुघरमें रहनेका फल वर्णन करतेहैं–जो एक ग्रह अपने नीचराशि वा शत्रुक्षेत्री हो तो निर्धनी, दो ग्रह नीचराशिगत वा शत्रुके घरमें हों तो दुःखी, तीन ग्रह हों तो मूढ, चार हों तो व्याधित ( पीडित ), पांच हों तो बंधुओंसे क्लेशित, छे ग्रह हों तो वह तापसे तापित हो, सात ग्रह हों तो वधतुल्य

होवै, यह एक ग्रहको आदि ले उत्तरवृद्धिकरके नीचगत वा शत्रुगत ग्रहोंका फल जानना ॥ ४ ॥

## राजयोगाः ।

एकोऽपि नृपतिजन्मप्रदो ग्रहः स्वोच्चगः सुहृद्दृष्टः ॥ बलिभिः केन्द्रोपगतैस्त्रिप्रभृतिभिरवनिपालभवः ॥ ५ ॥

सं० टी०—अथ राजयोगप्रकरणं चाह । यस्य जन्मनि एकोपि ग्रहः स्वोच्चगः मित्रेण तत्काले दृष्टः नृपजन्मदो भवति । त्रयो ग्रहा बलयुताः केंद्रगता भवंति स जातो राजा भवति । यत्र चत्वारश्च स राजा भवति । पंचादयो न गृहीतव्या यस्मात्पंचादिभिः केंद्रगतैरबलवद्भिर्जातो राजा भवति । तत्रैव तज्जातं त्रिभिश्चतुर्भिर्वा स्वोच्चगतैर्नकेवलं केन्द्रंगतैर्बलवद्भिः राजवंशे जातो राजा भवति ॥ ५ ॥

भावार्थः—अब राजयोग कहतेहैं--कि जिस किसीके जन्मसमय एकभी ग्रह उच्चराशिगत हो और मित्रग्रहोंसे दृष्ट हो तो राजाका जन्म-देनेवाला होताहै. तथा तीनसे अधिक ग्रह बली होके केन्द्रमें हों तो राजाके वंशमें उत्पन्न राजा होवै ॥ ५ ॥

## राजयोगान्तरम् ।

वर्गोत्तमगे चन्द्रे चतुराद्यैर्वीक्षिते विलग्ने वा ॥ नृपजन्म भवति राज्ये नृपयोगे बलयुतदशायाम् ॥ ६ ॥

सं० टी०—राजयोगांतरमाह । यस्मिन् राशौ चंद्रे व्यवस्थितः स चंद्रो राशिसंबंधिनवांशके भवति तदा वर्गोत्तमस्थो भवति । यस्मिन् वर्गोत्तमगते चंद्रे चतुराद्यैर्ग्रहैश्चतुःपंचषड्भिर्वीक्षिते तदा जातोऽन्यकुलजोपि राजा भवति विलग्ने वा यस्य लग्नस्योदयस्तस्य चेत्स्वनवांशकोदयो भवति तदा सलग्नो वर्गोत्तमस्थो भवति तस्मिन् लग्ने वर्गोत्तमगते चतुराद्यैर्ग्रहैः चंद्रवर्जितैश्चतुःपंचषड्भिर्वीक्षितैर्यो जातः सोपि

राजा भवति । तदुक्तं "वर्गोत्तमगते चंद्रे अथवा चंद्रवर्जिते" चतुराद्यैर्ग्रहैर्दृष्टे नृपवंशोद्भवः स्मृतइति राज्यं नृपयोगे बलयुततद्दशाया-मिति । विद्यमाने राजयोगे बलयुतग्रहस्य दशायां तस्य राज्यप्राप्तिर्व-क्तव्या ॥ ६ ॥

इति राजयोगप्रकरणं ॥

भाषार्थः—जो चंद्रमा वर्गोत्तम अर्थात् जिस राशिमें चंद्रमा हो उसीका नवांश हो, और चार पांच छे ग्रहोंकरके दृष्ट हो तो दूसरे कुलमें भी उत्पन्न हो तो राजा होवै, वा लग्नमें वर्गोत्तम नवांश हो अर्थात् जो लग्न हो उसीका नवांश हो तो भी राजा होवै. तथा जिसके राजयोग हो तो राजयोगकारक ग्रहोंमें जो ग्रह अधिक बली हो उस ग्रहकी दशाभं-तर्दशामें राज्यप्राप्ति कहना ॥ ६ ॥

प्रकीर्णाध्यायोंकाप्रकरणसंग्रहः ॥

शशियोगसमागमराशिशीलसंदर्शनानिभावाश्च ॥ आश्रयराज्यप्रभवाश्चाध्यायेऽस्मिन्क्रमेणोक्ताः ॥ ७ ॥

इति श्रीवराहमिहरविरचिते लघुजातके आश्रयाध्यायश्चतुर्दशः ॥ १४ ॥

सं० टी०—अथ प्रकीर्णकाध्यायोक्तप्रकरणसंग्रहमाह इति । लघु-जातकप्रकीर्णाध्याये अनफासुनफादुरुधराकेमद्रुमाख्याराशियोगा द्विग्रहादियोगाः प्रव्रज्यायोगाश्च । समागमा अस्थिरविभूतिमित्राद्यानि राशिशीलानि क्षेत्रापसंदृष्टइत्येवमाद्यानि । संदर्शनानि पुष्णंति शुभा भा-वानिइत्येवमाद्या भावा अंशकस्वरूपकुलतुल्याद्याश्च योगाः । "एकोपि नृपतिजन्मप्रद" इत्याद्या राजयोगाः । एतस्मिन्प्रकीर्णाध्याये क्रमेणो-क्ताः ॥ ३ ॥ इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां शिष्य-हिताभिधानायां प्रकीर्णाध्यायश्चतुर्दशः ॥ १४ ॥

भाषार्थः—चन्द्रयोग, द्विग्रहादियोग, राशिशील, दृष्टिफल, भावफल, आश्रययोग, राज्ययोग, इत्यादि विषय इस प्रकीर्णाध्यायमे कहेहैं ॥७॥

इति श्रीपण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां आश्रयाध्यायश्चतुर्दशः ॥ १४ ॥

## अथ नाभसयोगाध्यायः ॥ १५ ॥

### तत्रादौ रज्जुमुशलानलयोगाः ।

**चरभवनादिषु सर्वैराश्रयजा रज्जुमुशलनलयोगाः ॥ ईर्ष्युर्मानीधनवान् क्रमेण कुलविश्रुताः सर्वे ॥ १ ॥**

सं० टी०—अथ नाभसयोगाध्यायं व्याख्यास्यामः। तत्र नाभसयोगाश्चतुर्धा आश्रययोगो दलयोगो आकृतियोगः सांख्ययोगश्च। तत्र आश्रययोगास्त्रयः दलयोगौ द्वौ आकृतियोगा विंशतिसंख्याः संख्यायोगाः सप्त एवं द्वाविंशन्नाभसयोगाः। तत्राश्रययोगत्रयं तत्फलमाह। यदा सर्वे ग्रहाश्चरराशिगता भवंति न केचित् स्थिरराशिषु च द्विस्वभावेषु भवंति तदा रज्जुनाम योगो भवति। यदा सर्वे ग्रहाः स्थिरराशिषु भवंति न कश्चिच्चरराशौ द्विस्वभावराशौ वा भवति तदा मुशलनामयोगो भवति यदा सर्वे ग्रहाः द्विस्वभावराशिषु भवंति न कश्चिच्चरराशौ न चस्थिरराशौ भवति तदानलयोगः एषां फलान्याह। रज्जुयोगे जात ईर्ष्युः परममत्सरी भवति मुशले जातो मानी गर्वितो भवति। नलाख्ये योगे जातो धनवान् भवति। क्रमेणैतानि फलानि कुलविश्रुताः। सर्वे आश्रययोगैः सर्वैर्जाताः कुलविश्रुताः कुलख्याताः। इत्याश्रययोगाः ॥ १ ॥

भाषार्थः—अब नाभसयोगाध्याय कहतेहैं—कि चरणराशिआदिमें सब ग्रह पडे हों तो क्रमसे रज्जु, मुशल, नल योग होतेहैं. जैसे चरराशिमें सब ग्रह हों तो रज्जुयोग होताहै, और स्थिरराशियोंमें सब ग्रह स्थित हों तो मुशलयोग कहिये, जो द्विःस्वभावराशियोंमें सब ग्रह पड़े हों तो नलयोग कहिये. अब इन योगोंमें उत्पन्न मनुष्यका फल कहतेहैं—कि रज्जुयोगमें उत्पन्न मनुष्य ईर्षावाला हो अर्थात् पराये ऐश्वर्यको देखके

जलै, मुशलयोगमें जो मनुष्य हो तो वह अभिमानी होवै, नलयोगमें उत्पन्न मनुष्य धनवान् होवैहै. क्रमसे यह सब कुलमें विश्रुत कहिये प्रसिद्ध होतेहैं. ॥ १ ॥

## दलयोगौ ।

**केन्द्रत्रयगैः पापैः शुभैर्दलाख्यबहिश्च माला च ॥ सर्पेऽतिदुःखितानां मालायां जन्म सुखिनां च ॥ २ ॥**

सं० टी०—अथ दलयोगौ तयोर्जातस्य स्वरूपमाह। येषु केषु त्रिषु केंद्रेषु च यदा त्रयः पापग्रहाः अर्कारसौरा भवंति नचैकस्मिन्नपि केंद्रे सौम्यग्रहो भवति तदा सर्पो नाम दलयोगः यदा येषु केंद्रेषु सौम्यग्रहाः बुधगुरुशुक्रा भवंति न कश्चित्केंद्रे पापग्रहो भवति तदा माला नाम योगो भवति। तत्र योगद्वये चंद्रमा न ग्राह्यः। फलमाह सर्पेति। सर्पयोगे दुःखितानां जन्म भवति। मालायोगे सुखिनां जन्म भवति इति दलयोगौ ॥ २ ॥

भावार्थः—अब सर्प और माला यह दोनौं योग कहतेहैं—कि तीन केन्द्रोंमें पाप ग्रह हों तो अहि ( सार्प ) योग होताहै, तथा तीन केन्द्रोंमें शुभ ग्रह हों और पापग्रह केन्द्रमें हों तो मालानाम योग कहिये, सार्पयोगमें दुखियोंका, और मालायोगमें सुखियोंका जन्म होतीहै ऐसा जानना ॥ २ ॥

## गदादियोगाः ।

**द्विरनन्तरकेन्द्रस्थैर्गदा विलग्नास्तसंस्थितैः शकटम् ॥ खचतुर्थयोर्विहङ्गः शृङ्गाटकमुदयसुतनवगैः ॥ ३ ॥**

सं० टी०—अथाकृतियोगाः । तत्र गदाशकटविहंगशृंगाटकानां लक्षणं तत्फलोपनयनं चाह। द्विरनंतरेति द्वियोः केंद्रयोः यदा सर्वे ग्रहा भवंति तदा गदायोगो भवति स चतुर्थः। लग्नचतुर्थस्थैरेकः चतुर्थसप्तमस्थैर्द्वितीयः । सप्तमदशमस्थैस्तृतीयः । दशमलग्नस्थैश्चतुर्थः

विलग्नास्तसंस्थितैः शकटमिति । लग्ने सप्तमे च स्थाने यदा सर्वे ग्रहा भवंति तदा शकटाख्ययोगः । खचतुर्थयोर्विहंगः । दशमचतुर्थयोर्यदा सर्वे ग्रहा भवंति तदा विहंगयोग : । शृंगाटकमिति । लग्ने पंचमे नवमे यदा सर्वे ग्रहा भवति तदा शृंगाटकोयोगः ॥ ३ ॥

भाषार्थः—अब गदादियोग कहतेहैं—कि दो केंद्रोंमें सब ग्रह पड़े हों तो गदायोग होताहै, सो चार प्रकारका है. जो लग्न और चौथेमें सबग्रह हों तो पहला गदायोग, चौथे सातवें सब ग्रह हों तो दूसरा, सातवें दशवें सब ग्रह हों तो तीसरा, दशवें और लग्नमें सब ग्रह पडे हों तो चौथा गदायोग कहिये, और लग्नमें सातवें सब ग्रह स्थित हों तो शकटयोग कहिये, तथा दशवें चौथे सब ग्रह होवें तो विहंगयोग कहिये, लग्नमें पाचवें नवें सब ग्रह स्थित हों तो शृंगाटक योग कहिये ॥ ३ ॥

हलाख्ययोगः फलं च ।

**शृङ्गाटकतोऽन्यगतैर्हलमेतेषां क्रमात्फलोपनयः॥ यज्वाशकटाजीवीदूतश्चिरसौख्यभाक् कृषिकृत् ॥ ४ ॥**

सं० टी०—शृङ्गाटकमिति । लग्नंवर्जयित्वा यदान्यत्र स्थानत्रये परस्परं त्रिकोणगता ग्रहा भवंति तदा हलाख्ययोगः । सच त्रिधा । द्वितीयषष्ठस्थैर्दशमस्थैरेकः । तृतीयसप्तमैकादशस्थैर्द्वितीयः । चतुर्थाष्टमद्वादशगैस्तृतीयः । अथास्ययोगपंचकस्य क्रमात्फलोपनयः । गदायोगे जातो यज्वा भवति शकटयोगे शकटाजीवी । विहंगयोगे दूतः । शृंगाटके चिरसौख्यभाक् । हलाख्ये कृषिकृत् ॥ ४ ॥

भाषार्थः—अब हलनाम योग और गदादियोगोंका फल कहतेहैं—कि शृंगाटकयोगमें जो घर कहे हैं उनको छोड अन्य तीन स्थानोंमें परस्पर त्रिकोणगत ग्रह हों तो हलनाम योग होताहै, सो तीन प्रकारका है. दूसरे, छठे, ग्यारहवें, सब ग्रह हों तो पहला, तीसरे, सातवें, ग्यारहवें, सब ग्रह हों तो दूसरा, चौथे, आठवें, बारहवें सब ग्रह हों तो तीसरा हलयोग कहिये. अब इन पूर्वोक्त योगोंका फल कहतेहैं—कि गदायोगमें उत्पन्न मनुष्य यज्वा ( यज्ञकरनेवाला ) होवै, शकटयोगमें जन्मनेवाला शकट

( गाड़ी ) से जीविका करनेवाला हो, विहंगयोगमें जन्म हो तो दूतकार्यसे जीविकावाला हो, शृंगाटकयोगमें जन्म हो तो बहुत सुखयुक्त होवै, हलयोगमें जन्मनेवाला खेती करनेसे जीविकावाला होवै. ॥ ४ ॥

वज्रादियोगाः ।

क्रूरैः सुखकर्मस्थैः सौम्यैरुदयास्तसंस्थितैर्वज्रम् ॥ यव इति तद्विपरीतैर्मिश्रैः कमलं च्युतैर्वापी ॥ ५ ॥

सं० टी०—अथ वज्रयवकमलवापीयूपशरशक्तिदंडयोगानां लक्षणं फलानि चाह । क्रूरैरिति चतुर्थदशमस्थैः सर्वैः पापग्रहैः लग्नसप्तमस्थैश्च सौम्यग्रहैर्वज्रयोगः । वज्रविपरीतस्थैर्यवः । एतदुक्तं । चतुर्थदशमयोर्यदा सर्वे सौम्यग्रहा भवंति लग्नसप्तमगाश्च पापा भवंति तदा यवाख्यो योगः । मिश्रैः कमलमिति । वज्रयोगोक्तस्थानं विना सर्वे एव ग्रहाः यदा चतुर्षु केंद्रेषु भवंति तदा कमलयोगः । च्युतैर्वापीति । एवं केंद्रच्युतैः सर्वैरेव ग्रहैर्वापीयोगः । सच द्विधा । द्वितीयपंचाष्टमैकादशमस्थाः सर्वे भवंति तदैकः । यदि तृतीयषष्ठनवमद्वादशस्थाः सर्वे ग्रहास्तदा द्वितीयः ॥ ५ ॥

भाषार्थः—अब वज्रादियोग कहतेहैं-कि जो क्रूर ग्रह चौथे और दशवें होवें और शुभग्रह लग्नमें और सातवें हों तो वज्रयोग होताहै, और इससे विपरीत अर्थात् लग्नमें और सातवें क्रूर ग्रह तथा चौथे दशवें शुभग्रह हों तो यवयोग कहिये, और इन्ही केन्द्रोंमें क्रूरग्रह शुभग्रह मिश्रित हों तो कमलयोग होताहै और इन पूर्वोक्त केन्द्रोको छोड़ अन्य स्थानोंमें सब ग्रह पड़े हों तो वापीयोग होताहै. सो दो प्रकारका जानना. एक तो सब ग्रह पणफरमें हों. अथवा आपोक्लिममें हों तो दूसरा वापीयोग होताहै ॥ ५ ॥

यूपादियोगाः ।

लग्नादिकण्टकेभ्यश्चतुर्ग्रहावस्थितैर्ग्रहैर्योगाः ॥ यूपेषुशक्तिदण्डावज्रादीनां फलान्यस्मात् ॥ ६ ॥

सं० टी—लग्नादिकेंद्रमादितः कृत्वा चतुर्गृहेषु यदा सर्वे ग्रहाः भवंति तदा यूपेषुशक्तिदंडाख्ययोगा भवंति । तद्यथा—लग्नद्वितीयतृतीयचतुर्थैः सर्वग्रहैर्यूपाख्यो योगः । चतुर्थपंचमषष्ठसप्तमस्थैरिषुः सप्तमाष्टमनवमदशमस्थैः शक्तिः दशमैकादशद्वादशलग्नस्थैर्दण्डः ॥ ६ ॥

भाषार्थः—अब यूपादियोग कहतेहैं—कि लग्नादि चारों केन्द्रोंसे चार स्थानमें सब ग्रह हों तो क्रमसे यूपादियोग होतेहैं. जैसे—लग्नसे चौथे घरतक सब ग्रह स्थित हों तो यूपयोग कहिये, और चौथेसे सातवेंतक सब ग्रह हों तो इषुयोग होताहै, और सातवेंसे दशवेंतक सब ग्रह स्थित हों तो शक्तियोग जानना, दशवेंसे लग्नतक सब ग्रह हों तो दंडयोग कहिये, वज्रादियोगोंका फल आगेसे जानना ॥ ६ ॥

## वज्रादियोगानां फलम् ।

**आद्यन्तयोः सुखयुतः सुखभाङ्मध्ये घना-**
**न्वितोऽल्पसुखः ॥ त्यागी हिंस्रो धनवर्जितः**
**पुमान् प्रियैर्वियुक्तश्च ॥ ७ ॥**

सं०टी—वज्रादीनां योगानां फलानि वक्ष्यमाणानि बाल्ये सुखी यौवने दुःखितो वार्धकेपुनः सुखी एवंविधो वज्रयोगे जातो भवति । बाल्ये वार्द्धक्ये च दुःखितः यौवने सुखी एवंविधो यवाख्ये योगे जातो भवति । धनान्वितः कमलाख्ये योगे भवति । वापीसंज्ञके अल्पसुखो भवति । यूपाख्ये जातस्त्यागी भवति । इषुयोगे जातो हिंस्रो घातुको भवति । शक्तियोगे जातो धनवर्जितो भवति । दंडाख्ये योगे जातः प्रियैः पुत्रादिभिर्वियुक्तो भवति ॥ ७ ॥

भाषार्थः—अब वज्रादियोगोंका फल कहतेहैं—वज्रयोगमें जिसका जन्म हो वह बाल्यावस्था और वृद्धावस्थामें सुखी, मध्यावस्थामें दुखी होवे, और मध्यावस्थामें सुखी और बाल्यवृद्धावस्थामें दुखी यह यवयोगका फल जानना, तथा कमलयोगमें उत्पन्न मनुष्य धनवान् होवै, वापीयोगमें उत्पन्न मनुष्य थोड़े सुखवाला होवै, यूपयोगमें उत्पन्न हो तो त्यागी, और इषुयोगमें उत्पन्न हो तो हिंसा करनेवाला, तथा शक्तियो-

गमें उत्पन्न मनुष्य धनवर्जित ( दरिद्री ) होवै और दण्डयोगमें उत्पन्न हो तो अपने पुत्रादिकोंसे वियुक्त ( वियोग ) होवै ॥ ७ ॥

## नौकादियोगाः ।

**तद्वत् सप्तमसंस्थैर्नौकूटक्षत्रकार्मुकाणि स्युः ॥**
**नावाद्यैरप्येवं कण्टकादिस्थैः स्मृतोऽर्धशशी ॥८॥**

सं० टी०—अथ नौकूटच्छत्रकार्मुकार्धचंद्राणां लक्षणमाह | तद्वत्सप्तर्क्षस्थैरित्यादि | एकस्मात्केंद्रादारभ्य सप्तभिर्ग्रहैः सप्तमर्क्षस्थैश्च चत्वारो नौकूटच्छत्रकार्मुकाख्या योगा भवंति | लग्नद्वितीयतृतीयचतुर्थपंचमषष्ठसप्तमगैः सर्वैर्ग्रहैर्नौकाख्यः | चतुर्थादिदशमांतं कूटाख्यः | सप्तमादिलग्नस्थैश्छत्राख्यः | दशमादिचतुर्थांतस्थैश्चापाख्यः | नावाद्यैरिति | नावाद्यैर्योगैः कटकादिसंस्थैर्यदा पणफरापोक्लीमादिषु वा सप्तभिर्निरंतरगतैरर्धचंद्राख्यो योगो भवति सचाऽष्टधा | तद्यथा–द्वितीयाद्यष्टमांतेष्वेकस्तृतीयादिनवमांतेषु द्वितीयः | पंचमाद्येकादशांतेषु तृतीयः | षष्ठादिद्वादशांतेषु चतुर्थः | अष्टमादिद्वितीयांतेषु पंचमः | नवमादितृतीयांतेषु षष्ठः | एकादशादिपंचमांतेषु सप्तमः | द्वादशादिषष्ठांतेषु अष्टमः ॥ ८ ॥

भाषार्थः—अब नौकादियोग कहतेहैं–तैसेही लग्नादि केन्द्रोंसे सात स्थानतक सब ग्रह हों तो क्रमसे नौकादियोग होतेहैं. जैसे लग्नसे सातवें तक जो सब ग्रह पड़े हों तो नौकायोग होताहै, चौथेसे दशवेंतक सब ग्रह पड़े हों तो कूटयोग कहिये, सातवेंसे लग्नतक सब ग्रह हों तो छत्रयोग कहिये, और दशवेंसे चौथेतक सब ग्रह हों तो कार्मुकयोग जानना तथा जो केन्द्रके आदि पणफर आपोक्लिमसे सात स्थानोंतक सब ग्रह हों तो अर्द्धशशीयोग कहिये. सो आठप्रकारका है, दूसरे घरसे आठवें घरतक सब ग्रहहों तो पहला, तीसरेसे नवेंतक दूसरा, पाचवेंसे ग्यारहवें तक तीसरा, छठेसे बारहवें तक चौथा, आठवेंसे दूसरेतक पाचवां, नवेंसे तीसरेतक छठा, ग्यारहवेंसे पाचवेंतक सातवां, बारहवेंसे छठेतक आठवां अर्धशशी योग कहिये ॥ ८ ॥

चक्रसमुद्रयोगौ ।

एकान्तरैर्विलग्नात्षड्भवनावस्थितैर्ग्रहैश्चक्रम् ॥
अर्थाच्च तद्वदुदधिर्नौप्रभृतिफलानि सर्वेषाम् ॥ ९ ॥

सं० टी०—अथ चक्रसमुद्रयोगयोर्लक्षणमाह। लग्नादारभ्यैकांतरावस्थितैर्ग्रहैः षट्सु चक्राख्यो योगो भवति । तद्यथा-लग्नतृतीयपंचसप्तमनवमैकादशेषु षट्सु यदा सर्वे ग्रहा भवंति तदा चक्राख्यो योगः। अर्थाद्द्वितीयादारभ्यैकांतरावस्थितैः सप्तभिर्ग्रहैः षट्सु उदधिनाम योगो भवति । तद्यथा-द्वितीयचतुर्थषडष्टदशमद्वादशेषु षट्सु ग्रहेषु यदा सप्तग्रहा भवंति तदा उदधियोगो भवति ॥ ९ ॥

भाषार्थः—अब चक्र समुद्र इन दोनों योगोंका लक्षण कहतेहैं-जन्मलग्नसे लेके एक एक राशि छोड़के छे घरमें सब ग्रह पड़े हों तो चक्रनाम योग होताहै, और दूसरे घरसे लेके एक एक स्थान छोड़ सब ग्रह पड़े हों तो उदधि कहिये समुद्रयोग होताहै, आगे नौकादिक योगोंका फल कहतेहैं ॥ ९ ॥

नौकादियोगफलम् ।

कीर्त्या युक्तोऽनृतवाक स्वजनहितः शूरसुभगधनिभूपाः ॥ इत्याकृतिजा योगा विंशतिरात्मगुणैस्तेषु नन्दन्ते ॥ १० ॥

सं० टी०—नौप्रभृतीनां सप्तानां फलान्याह । नौयोगे जातः कीर्त्या युक्तो भवति । कूटयोगे जातोऽनृतवाक् असत्यभाषी भवति । छत्रयोगे जातः स्वजनहितो भवति । कार्मुकयोगे जातः शूरो भवति । अर्धचंद्रे जातः सुभगो भवति । चक्रयोगे जातो धनी भवति । समुद्रयोगे जातो राजा भवति । आकृतियोगोपसंहारार्थमाह । आकृतियोगा विंशतिः प्रोक्ताः । एषामन्यतमेन जाता आत्मगुणैर्नन्दंते स्वबार्जितश्रियो भवंतीत्यर्थः ॥ १० ॥

भाषार्थः—अब नौकादियोगोंका फल कहतेहैं-जिसका जन्म नौकायोगमें हो तो वह कीर्तिसे युक्त हो, कूटयोगमें उत्पन्न मनुष्य असत्य-

वादी हो, छत्रयोगमें उत्पन्न मनुष्य स्वजनोंके हितमें रहनेवाला हो, कार्मुकयोगमें उत्पन्न मनुष्य शूर होवै, अर्द्धशशीयोगमें सुंदर रूपवाला हो, चक्रयोगमें जन्मनेवाला धनवान् होवै, समुद्रयोगमें उत्पन्न मनुष्य राजा होवै, यह आकृतिज योग बीस प्रकारके कहे. इनमें उत्पन्न मनुष्य योगोंके गुणोंसे सुखी होवै ॥ १० ॥

गोलादिसप्तसङ्ख्यकयोगाः ।

**एकादिगृहोपगतैरुक्तान् योगान्विहाय सङ्ख्याने ॥ गोलयुगशूलकेदारपाशदामाख्यवीणाः स्युः ॥ ११ ॥**

सं० टी—अथ सप्तसांख्ययोगानाह । एकादिगृहोपगतैरित्यादि । उक्तयोगान् रज्जुमुशलादिसमुद्रांतान्योगान् वर्जयित्वा यदैकस्मिन् राशौ सर्वे ग्रहा भवंति तदा गोलाख्यो योगो भवति । यदा राशिद्वये तदा युगाख्यः यदा राशित्रये तदा शूलाख्यः यदा राशिचतुष्के तदा केदाराख्यः यदा राशिपंचके तदा पाशाख्यः । यदा राशिषट्के तदा दामाख्यः । यदा राशिसप्तके तदा वीणायोगो भवति ॥ ११ ॥

भाषार्थः—अब गोलादि सात योग कहतेहैं—कि एक आदि ग्रह होनेसे गोलादियोग कहना, पूर्व जो योग कहे हैं उनको छोड़, राशिमें सब ग्रहोंकी स्थिति हो तो गोलयोग होताहै, दो राशिमें सब ग्रह हो तो युगयोग कहिये, तीन राशियोंमें सब ग्रह हों तो शूलयोग, चार राशियोंमें होनेसे केदारयोग, पांच राशियोंमें होनेसे पाशयोग, छे राशियोंमें होनेसे दामाख्ययोग, सात राशियोंमें होनेसे वीणायोग होताहै. ॥ ११ ॥

गोलादियोगफलम् ।

**दुःखितदरिद्रघातककृषिकरदुःशीलपशुपतिनिपुणानाम् ॥ जन्मक्रमेण सुखिनः परभाग्यैस्सर्व एवैते ॥ १२ ॥**

**इति श्रीवराहमिहराचार्यकृते लघुजातके नाभसयोगाध्यायः पञ्चदशः ॥१५॥**

सं० टी—सांख्ययोगजातानां फलान्याह । गोलाख्ये योगे दुःखितानां जन्म भवति । युगाख्ये दरिद्रस्य । शूलाख्ये योगे घातुकस्य घातुको वधकारी । केदाराख्ये कर्षकस्य । पाशाख्ये दुःशीलस्य । दामाख्ये पशुपालस्य । वीणायां निपुणस्य । एवं विधानं जन्मक्रमेण सांख्ययोगे जाताः सर्वएव अन्यवित्तसुखिनो भवंति । अथैकस्मिन् राशौ चरे स्थिरे द्विस्वभावे वा सर्वे ग्रहा भवंति तदा रज्जुमुशलनलादियोगानां मध्ये अन्यतमो योगो भवति । यद्यप्युक्तयोगान् विहायेति । तथापि सांख्ययोगाः निरवकाशाः । अतः "निरवकाशादिविधयः सावकाशान् विधीन् बाधंते" इति न्यायेन सांख्ययोगेन आश्रययोगोऽत्र बांध्यते यस्माद्गोलस्यान्य उपायएव नास्ति तथा दलयोगाकृतियोगयोः समकाले उपस्थानं नास्ति तथा दलयोगाश्रययोगयोरपि नास्ति । अथ दलयोगैः सांख्ययोगा युज्यंते । तथापि दलयोगप्राबल्यं तथाकृतियोगाः आश्रययोगैः युज्यंते तदा आकृतियोगफलं भवति । संख्यायोगाआश्रययोगाश्च आकृतियोगैरभिभूयंते । आश्रययोगाः सांख्ययोगानाभसादियोगाश्च समाप्तदशास्वपि फलप्रदा भवंति ॥ १२ ॥

इति श्रीभट्टोत्पलवि० लघुजातकटीकायां नाभसादियोगाध्यायः एकादशः ॥ २ ॥

भाषार्थः—अब गोलादि योगोंका फल कहतेहैं-कि गोलयोगमें जिसका जन्म हो वह दुःखित रहे, युगयोगमें दरिद्री, शूलयोगमें वधिक, केदारयोगमें खेती करनेवाला, पाशयोगमें दुःशील, दामयोगमें पशुओंका पालक, वीणायोगमें निपुण होवै, यह सब क्रमसे दूसरोंके भाग्यसे इन योगोंमें होनेवाले सुखी होतेहैं. ॥ १२ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां नाभसयोगाध्यायः पञ्चदशः ॥ १५ ॥

## अथ स्त्रीजातकाध्यायः ॥ १६ ॥

### तत्रादौ स्त्रियाः आकारलक्षणम् ॥

**स्त्रीपुंसोर्जन्मफलं तुल्यं किन्त्वत्र जन्मलग्नस्थम् ॥ तद्बलयोगाद्वपुराकृतिश्च सौभाग्यमस्तमये ॥ १ ॥**

सं० टी०—अथ स्त्रीजातकाध्यायं व्याख्यास्यामः । तत्रादावेव पुरुषजन्मोक्तफलनिर्देशमाह । स्त्रीपुंसोर्जन्मफलं तुल्यं यादृशमेव पुरुषजातकं तादृशमेव स्त्रियाः स्त्रीणां विशेषश्चंद्रलग्नचंद्राकांतराशिवशेन लग्नवशेन च विचारणीयं । किंतदित्याह । तद्बलयोगाद्वपुराकृतिः । चंद्रवशाच्च लग्नवशाच्च वपुस्तया वक्तव्यम् । आकृतिश्च वक्तव्या । वपुःस्वरूपं आकृतिः संस्थानं स चेत् सौम्यग्रहयुक्तो भवति तदा सुभगा वाच्या । पापग्रहयुक्ते दृष्टे तस्मिन् दुर्भगेति वाच्यम् ॥ १ ॥

भाषार्थः—अब स्त्रीजातकाध्याय कहतेहैं—स्त्री और पुरुषका जन्मसमयका फल बराबर है. किन्तु यहां चंद्रमासे और जन्मलग्नसे फल कहना, इन दोनोंके बलयोगसे शरीर और आकृति कहना तथा सातवें घरसे सौभाग्यका विचार करना ॥ १ ॥

युग्मर्क्षे लग्नेन्द्वोः प्रकृतिस्था रूपशीलगुणयुक्ता ॥
ओजे पुरुषाकारा दुःशीला दुःखिता चैव ॥ २ ॥

सं० टी०—चंद्रलग्नवशाद्वपुरित्येतदुक्तमिति तन्निर्देशार्थमाह । युग्मराशौ वृषादौ स्थिते चंद्रमसि लग्ने वा जाता स्त्री प्रकृतिस्था भवति । स्त्रीरूपेत्यर्थः । रूपशीलगुणयुता भवति । ओजे विषमराशौ मेषादौ स्थिते चंद्रमसि लग्ने वा तस्मिन् जाता स्त्री पुरुषाकारा स्त्रीलक्षणरहिता भवति । दुःशीला दुःखिता च भवति । अर्थादेवं चंद्रलग्नयोः एकस्मिन्युग्मराशिगते अन्यस्मिन् ओजराशिगते अन्यस्मिन् ओजराशिगते मध्यमरूपा मध्यगुणा च भवति ॥ २ ॥

भाषार्थः—जन्मलग्न सम राशि हो और चन्द्रमा भी समराशिका हो तो स्त्रीका जैसा स्वभाव होताहै वैसाही शील, रूप, गुण, स्वभाव स्त्रियोंहीकासा होवे, और जो चंद्रमा और लग्न विषम राशि हो तो वह स्त्री पुरुषाकार हो अर्थात् पुरुषका स्वभाव और दुःशीला दुखभागिनी होवै ॥ २ ॥

पतिस्वरूपम् ।

अबले सप्तमभवने सौम्येक्षणवर्जिते च कापुरुषः ॥
भवति पतिश्चरभेऽस्ते प्रवासशीलो भवेद्भ्रान्ती ॥ ३ ॥

सं० टी०—तस्याः पतिस्वरूपमाह । लग्नात्सप्तमभवने बलहीने सौम्यग्रहदर्शनविवर्जिते च जातायाः तस्याः भर्ता कापुरुषो भवति नाम कुत्सितपुरुषो भवति । जन्मभवनात्सप्तमभवने चरराशिगते या जाता स्त्री तस्याः भर्ता परिभ्रमणशीलो भवति । स्थिरराशौ सप्तमस्थानगते नित्यं गृहस्थः । द्विस्वभावे सप्तमस्थानगते मिश्र इति ॥३॥

भाषार्थः—अब पतिका स्वरूप और लक्षण कहतेहैं—कि जन्मलग्नसे सातवां घर निर्बल हो और शुभग्रहकी दृष्टि नहीं होवे तो उस स्त्रीका पतिका पुरुष कहिये दुष्टस्वभाव तथा नीचकर्मी होवै, और जो सातवें घर चर राशि हो तो उसका पति भ्रमण करनेवाला होवै और स्थिरराशि सप्तम हो तो घरमें रहै, द्विःस्वभाव राशि हो तो मिश्रफल कहना, अर्थात् कभी घरमें कभी परदेशमें ॥ ३ ॥

विधवादिलक्षणम् ।

बाल्ये विधवा भौमे पतिसन्त्यक्ता दिवाकरेऽस्तस्थे ॥ सौरौ पापैर्दृष्टे कन्यैव जारं समुपयाति ॥ ४ ॥

सं०टी०—यस्या जन्मलग्नात्सप्तमोऽगारको भवति । सा बाल्ये एव विधवा भवति।सप्तमेऽर्के जाता या स्त्री सा पत्या संत्यज्यते।यस्या जन्मलग्नाच्छनैश्चरः सप्तमो भवति सच पापग्रहदृष्टः सा कन्यैव सती अनूढैव जारं समुपयाति प्राप्नोति ॥ ४ ॥

भाषार्थः—अब बिधवायोग कहतेहैं—जो जन्मलग्नसे अथवा चंद्रमासे सातवें मंगल हो तो वह बाल्यावस्थामें विधवा होवै, तथा सूर्य सातवें हो तो पतिसे त्याग दीहुई जानना, तथा शनैश्चर पापग्रहसे दृष्ट सातवें हो तो कन्या जो है सोई स्वयं जार ( लम्पट पुरुष ) के समीप जाय. अर्थात् व्यभिचारिणी हो. ॥ ४ ॥

ब्रह्मवादिनीस्त्रीलक्षणम् ।

सितकुजजीवेन्दुसुतैर्बलिभिर्लग्ने समश्च यदि राशिः ॥ स्त्री ब्रह्मवादिनी स्याद्भूरिशास्त्रकुशला प्रतीता च ॥ ५ ॥

संटी०—येन योगेन जाता ब्रह्मवादिनी भूरिशास्त्रकुशला प्रतीता च भवति तदर्थमाह । यस्या जन्मनि लग्नगतः समराशिर्भवति । शुक्रांगारकगुरुबुधाश्च तस्मिन्बलिनो भवंति तदा जाता स्त्री ब्रह्मवादिनी मोक्षशास्त्रकुशला प्रतीता च भवति । प्रतीता विख्याता ॥ ५ ॥

भाषार्थः—अब ब्रह्मवादिनी स्त्रीका योग कहतेहैं–जन्मलग्नसे किसी स्थानमें शुक्र, मंगल, बृहस्पति, बुध, बली होके स्थित हों और लग्न समराशि हो, तो वह स्त्री ब्रह्मवादिनी होवै, अर्थात् वेदान्तशास्त्रके जाननेवाली हो, और बहुत शास्त्रोंमें कुशल तथा प्रसिद्ध होवै ॥ ५ ॥

स्त्रियाः फलासंभवे भर्तुःफलम् ।

पुञ्जन्मफलं यद्यन्न घटति वनितासु पतिषु तत्तासाम् ॥ वक्तव्यं राज्याद्यं वृषणविनाशादि वा पापम् ॥ ६ ॥

इति श्रीवराहमिहरकृते लघुजातके स्त्रीजातकाऽध्यायः ॥ १६ ॥

संटी०—अथ स्त्रियाः पुरुषजन्मफलसम्भवे तद्भर्तुरिति आदे शार्थमाह । स्त्रीपुंसोर्जन्मफलं तुल्यमित्युक्तं । यत्र शुभमशुभं वा स्त्रियो न घटेते न संभवतीत्यर्थः । यथा राज्याद्यं शुभं पापं वा वृषण विनाशादिकं तत्र तस्या भर्त्तुर्वक्तव्यं । एवमन्यान्यप्यघटमानानि वेदितव्यानि ॥ ६ ॥

इति भट्टोत्पलविरचितायां लघुजातकटीकायां
स्त्रीजातकाध्यायः द्वादशः ॥ १२ ॥

भाषार्थः—स्त्रीके असंभव फलादेशमें पुरुषको सो फल होना चाहिये सो कहतेहैं–कि जिस स्त्रीके पुरुष जन्मफलके समान कोई फल हो और स्त्रीमें उस फल घटनाका संभव न हो तो वह फल उस स्त्रीके पतिको कहना चाहिये. जैसे राजयोग, द्रव्यप्राप्ति तथा नाशयोग इत्यादि ॥ ६ ॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां स्त्रीजातकाध्यायः षोडशः ॥ १६ ॥

## अथ निर्याणाध्यायः ॥ १७ ॥

### तत्रादावष्टमस्थग्रह मृत्युज्ञानम् ।

**सूर्यादिभिर्निधनगैर्हुतवहसलिलायुधज्वरामय-**
**जः॥ क्षुत्तृट्कृतश्च मृत्युः परदेशे नैधने चरभे ॥१॥**

सं०टी० —अथ निर्याणाध्यायं व्याख्यास्यामः । तत्रादौ सूर्यादि-
भिरष्टमगैर्मृत्युज्ञानमाह । यस्य जन्मलग्नादष्टमस्थानेऽर्को भवति त-
स्याग्निहेतुको मृत्युर्भवति । यस्य चंद्रोऽष्टमो भवति तस्य
जलात् यस्य भौमोऽष्टमो भवति तस्यायुधहेतुको मृत्युः । यस्य
बुधोऽष्टमो भवति तस्य ज्वरहेतुको मृत्युः । यस्य गुरुरष्टमो भवति
तस्यामयात् । आमयादजीर्णादिरोगतः । यस्य शुक्रोऽष्टमो भवति तस्य
क्षुद्धेतुको मृत्युः । यस्य शनैश्चरोऽष्टमगो भवति तस्य तृड्ढेतुको मृत्यु-
र्भवति । बहवो ग्रहाः अष्टमस्थानगता भवंति तदा यो बलवान् तद्धे-
तुको मृत्युर्भवति । एवं प्रकारे जाते दर्शनार्थज्ञानमाह । यस्य लग्ना-
दष्टमो राशिश्चराख्यो भवति तस्य परदेशे मृत्युर्भवति । अर्थाद्यस्य
लग्नादष्टमः स्थिरराशिर्भवति तस्य स्वदेशे मृत्युः । यस्याष्टमो द्विस्व-
भावराशिर्भवति तस्य मार्गे मृत्युर्भवति ॥ १ ॥

भाषार्थः—अब निर्याणाध्याय कहतेहैं—तहां प्रथम अष्टमस्थ ग्रहोंसे
मृत्युज्ञान कहतेहैं—सूर्यादि ग्रहोंके अष्टमस्थ होनेसे यह फल जानना, जैसे
सूर्य अष्टम हो तो अग्निकरके मृत्यु होवै, चंद्रमा हो तो जलहेतुसे, मंगल
हो तो हथियारके मृत्यु हो, बुध हो तो ज्वरसे, बृहस्पति हो तो किसी
गुप्त रोगसे, शुक्र हो तो क्षुधाकरके, शनि हो तो प्यासकरके मृत्यु होवै
और अष्टमभावमें चर राशि हो तो परदेशमें, स्थिर राशि हो तो स्वदे-
शमें, द्विःस्वभाव राशि हो तो मार्गमें मृत्यु कहना ॥ १ ॥

### ग्रहदृष्ट्या मृत्युज्ञानम् ।

**यो वा निधनं पश्यति बलवाँस्तद्धातुकोपजो**

**मृत्युः ॥ लग्नात्यंशस्य पतिर्द्वाविंशः कारणं मृत्योः ॥ २ ॥**

सं० टी०—यस्य लग्नादष्टमं स्थानं शून्यं ग्रहवर्जितं भवति तस्य मृत्युज्ञानमाह । यदा अष्टमस्थानं शून्यमादित्यः पश्यति तदा पित्तप्रकोपेण म्रियते । यदा चंद्रः पश्यति तदा कफवातप्रकोपेण भौमस्तदा पित्तप्रकोपेण बुधश्च तदा वातपित्तश्लेष्मणां त्रयाणामपि प्रकोपेण बृहस्पतिस्तदा कफप्रकोपेण शुक्रस्तदा कफवातप्रकोपेण सौरिस्तदा वातप्रकोपेण । यदा बहवो ग्रहाः अष्टमस्थानं पश्यंति तदा तेषां मध्ये यो बली भवति तस्य धातुकोपेन मृत्युर्भवति । यस्य जन्मन्यष्टमं स्थानं केनचिद्युतदृष्टं न भवति तस्य मृत्युप्रकारज्ञानमाह । यस्य जन्मलग्नाद्यो लग्नत्र्यंशः द्रेष्काणः तस्माद् द्वाविंशो यो द्रेष्काणः तस्य योऽधिपतिस्तस्य यत्कारणमुक्तं हुतवहसलिलादितत्कृतो मृत्युर्भवति॥२॥

भावार्थः—अब लग्नसे आठवें कोई ग्रह न हो तो मृत्युज्ञान कहतेहैं-कि जो अष्टमस्थ ग्रह पूर्व कहा है उससे कहना अथवा अष्टमस्थानको जो ग्रह बली होके देखता हो तो उस ग्रहके धातुकोपसे मृत्यु कहना और जो किसी गृहकी दृष्टि अष्टममें न हो तो जन्मलग्नसे बाईसवें द्रेष्काणपतिके धातुकोपसे मृत्यु कहना, जो द्रेष्काण जन्मलग्नका है वही द्रेष्काण आठवें घरका हो तो बाईसवां जानना ॥ २ ॥

देवलोकादिगतिज्ञानम् ।

**सुरपितृतिर्यङ्नरकान् गुरुरिन्दुसितावसृग्रवी-ज्ञयमौ ॥ रिपुरन्ध्रत्र्यंशकपा नयन्ति चाऽस्तारिनिधनस्थाः ॥ ३ ॥**

सं० टी०—तत्र जन्मलग्ने प्रथमद्रेष्काणस्तथापि षष्ठेऽपि राशौ प्रथमो भवति । अथ जन्मलग्ने द्वितीयस्तदा षष्ठेऽपि राशौ द्वितीयो भवति। था जन्मलग्ने तृतीयः षष्ठेऽपि तृतीयः एवं सप्तमाष्टमयोरपि न केवल

यावत्सर्वेष्वेव एवमपि नवांशकल्पना तत्र बृहस्पतिर्यदा गतिदायको बृहस्पतिर्भवति तदा देवलोके गतिं प्रयच्छति । चंद्रशुक्रयोरन्यतमः पितृलोके गतिं प्रयच्छति । आदित्यभौमयोरन्यतमस्तिर्यङ्लोके गतिं प्रयच्छति । बुधशनैश्चरयोरन्यतमो नरके प्रयच्छति ॥ ३ ॥

भाषार्थः—अब मृतक मनुष्य देवादिलोकोंमेंसे किस लोकमें जायगा सो कहतेहैं–कि जन्मलग्नसे छठे आठवें द्रेष्काणका पति तिसकरके लोक जानना. और लग्नसे सातवें छठे आठवें स्थानमें जो ग्रह स्थित हो उसकरके लोक जानना और जो अनेक ग्रह पूर्वोक्त स्वामियोंमें अथवा स्थानोंमें हो तो उनमेंसे अधिक बली हो तिसकरके लोक जानना. तहाँ बृहस्पति जो गतिदायक हो तो देवलोक देवे, चंद्र शुक्र हो तो पितृलोक देवें, मंगल सूर्य गतिदायक हो तो तिर्यकूलोकमें गति देताहै, और बुध शनैश्चर गतिदायक हो तो नरकदायक जानना ॥ ३ ॥

## मोक्षगतिज्ञानम् ।

**षष्ठाष्टमकण्टकगो गुरुरुच्चो भवति मीनलग्ने वा ॥**
**शेषैरबलैर्जन्मनि मरणे वा मोक्षगतिमाहुः ॥ ४ ॥**

सं० टी०—मोक्षयोगज्ञानमाह । यस्य जन्मनि लग्नात् षष्ठे स्थानेऽष्टमे वा केंद्राणामन्यतमे वा बृहस्पतिर्भवति सचोच्चस्थो भवति तदा मोक्षो भवति । अथवा लग्नं मीनो भवति तत्र बृहस्पतिवर्ज्यमन्ये ग्रहा बलवर्जिता भवंति तदा जातस्य मोक्षो भवति । एवंविधे योगे मरणकाले मोक्षो भवति । तत्र जन्ममरणं तत्सर्वेषामपि गतियोगानां ज्ञातव्यम् ॥ ४ ॥

भाषार्थः—अब मोक्षगतिज्ञान कहतेहैं–जन्मलग्नसे छठे आठवें और कंटक ( केन्द्र ) १।४।७।१० स्थानमें बृहस्पति उच्चका होके पड़े तो मोक्षगति कहिये अथवा मीनजन्मलग्न हो और बृहस्पति लग्नमें हो और शेष ( बाकी ) ग्रह निर्बल हों जन्मसमय अथवा मरणसमयमें ऐसे ग्रह पड़ें तो मोक्षगतिको देतेहैं ऐसा कहना ॥ ४ ॥

## जातो जन्तुः कस्माल्लोकादागत इति ज्ञानम् ।

गुरुरुडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ विबुधपितृतिरश्चो नारकीयाँश्च कुर्युः ॥ दिनकरशशिवीर्याऽधिष्ठितत्र्यंशनाथाः प्रवरसमनिकृष्टांस्तुङ्गह्रासादनूके ॥ ५ ॥

इति श्रीवराहमिहरकृते लघुजातके निर्याणाध्यायः सप्तदशः ॥ १७ ॥

सं॰ टी॰—यो जातो जंतुः स कस्माल्लोकादागत इति ज्ञानार्थमाह । आदित्यचंद्रयोर्यो बलवान्स यस्मिन्द्रेष्काणे व्यवस्थितः तस्य द्रेष्काणस्य योऽधिपः तस्य लोकस्तस्मादागत इति वक्तव्यं स यदि द्रेष्काणो गुरुसंबन्धी भवति तदा देवलोकादागत इति वाच्यं । चंद्रशुक्रयोरन्यतरसंबन्धी चेद्भवति तदा पितृलोकादागतः । आदित्यभौमयोरन्यतरसंबन्धी चेद्भवति तदा तिर्यग्लोकात् । बुधसौरयोरन्यतरसंबंधी चेद्भवति तदा नरकलोकादागतः । यस्माल्लोकादागतः तत्रापि श्रेष्ठमध्यहीनत्वमाह । यद्ग्रहदर्शितलोकादस्य जन्म स चेद्ग्रहः स्वोच्चराशिस्थः तत्रासौ श्रेष्ठ आसीदिति ज्ञेयं । अथोच्चराशिच्युतो नीचराशिमप्राप्यावस्थितः तदासौ मध्यमः आसीदिति ज्ञेयम् । अथ नीचराशिस्थितस्तदाधम आसीदिति ज्ञेयम् ॥ ५ ॥

इति भ॰ विरचितायां लघुजातकटी॰ नैर्याणिकाऽध्यायस्त्रयोदशः ॥ १३ ॥

भाषार्थ—अब उत्पन्न प्राणी किस लोकसे आया है सो जाननेके निमित्त कहतेहैं—जन्मलग्नसे किसी घरमें सूर्य चन्द्रमा हों और दोनोंमें जो बली होके जिसके द्रेष्काणमें हो उस द्रेष्काणका जो स्वामी है तिसका जो लोक है उस लोकसे आया भया कहना, वह द्रेष्काण बृहस्पतिका होवे तो विबुध ( देव ) लोकसे आया भया कहना, चंद्रमा और शुक्रका द्रेष्काण होय तो पितृलोकसे, सूर्य मंगलका संबंधी द्रेष्काण होय तो तिर्यक्लोकसे, शनिबुधसम्बन्धी द्रेष्काण होय तो नरकसे आया क-

हना. तहां द्रेष्काणपति सूर्यचन्द्रादिके बलानुसार उत्तम, मध्यम, निकृष्ट रहा ऐसा पूर्वजन्ममें कहना, जैसे पूर्वद्रेष्काणाधिप अपनी उच्चराशिमें हो तो वह जिस लोकसे आया है वहांभी श्रेष्ठ रहा है, तथा जो अपनी राशि और मित्रक्षेत्रमें हो तो मध्यम रहा, और जो नीचराशि शत्रुक्षेत्रआदिमें हो तो निकृष्ट रहा है. यह पूर्वजन्ममें फल जानना॥९॥

इति श्रीमत्पण्डितनारायणप्रसादकृतायां लघुजातकभाषाटीकायां निर्याणाध्यायः सप्तदशः ॥ १७ ॥

## अथ नष्टजातकाऽध्यायः ॥ १८ ॥

**गोसिंहौ जितुमाष्टमौ क्रियतुले कन्यामृगौ च क्रमात् संवर्ग्या दशकाष्टसप्तविषयैः शेषाः स्वसंख्यागुणाः ॥ जीवारास्फुजिदैन्दवाः प्रथमवच्छेषा ग्रहाः सौम्यवद्राशीनां नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गपे ॥ १ ॥**

सं० टी०—तत्र प्रश्नकालं तात्कालिकं लग्नं कृत्वा लिप्तापिंडीकार्यं तत्र तस्य लिप्तपिंडीकृतस्य गुणाकारविज्ञानार्थमाह । वृषलग्नगतं दशभिर्गुणयेत् सिंहं च दशभिरेवं मिथुनमष्टभिर्वृश्चिकमप्यष्टभिः मेषं सप्तभिस्तुलामपि सप्तभिर्गुणयेत् । कन्यां पंचभिः मकरमपि पंचभिः कर्कटलग्नगतं चतुर्भिर्गुणयेत् । धनुर्नवभिः कुंभमेकादशभिः मीनं द्वादशभिरेवं तावल्लग्नं स्वगुणाकारेणावश्यमेव गुणयेत् । लग्ने यदि ग्रहो भवति तत्र गुणाकारविधिः गुरौ लग्नगते दशभिर्गुणयेत् । भौमे लग्नगते अष्टभिः शुक्रे सप्तभिः बुधे पंचभिः शेषा आदित्यचंद्रशनयस्तेषां प्रत्येकं पंचभिर्गुणाकारः एवं तात्कालिकलिप्तापिंडीकृतं लग्नमवश्यं राशिगुणकारेण गुणयेत् । ततो ग्रहसंभवे सति ग्रहोक्तगुणकारैरपि एवं गुणितमेकांते स्थापयेत् ॥ १ ॥

भाषार्थः—अब नष्टजातकाध्याय कहतेहैं:-जिस समय कोई प्रश्न करे उसीसमय तात्कालिक लग्न बनाकर लिप्तिकापर्यन्त पिंड करना, फिर

जो लिप्तापिंडी किये हुयेको गुणनेका उपाय है सो लिखतेहैं. वे गुणक यह हैं कि वृष, सिंह, लग्नके कलापिंडको १० से गुणना, मिथुन, वृश्चिक हो तो ८ से गुणना, मेष, तुलाको ७ से, कन्या, मकरको ५ से, और शेष राशि अपने अपने संख्याके अंकोंसे अर्थात् कर्क ४ से, धन ९ से, कुंभ ११ से, मीन १२ से गुणना, इसप्रकार गुणा करके फिर जो कोई ग्रह लग्नमें हो तो पूर्व अपने गुणाकारसे गुणे पिंडको उस ग्रहके गुणकारांकसे गुणन करना, सो कहतेहैं. जो लग्नमें अनेक ग्रह हों तो सभीके गुणकारोंसे एक एक बार गुण देवे, लग्नगत ग्रहोंके गुणकार यह हैं कि सूर्य, चंद्रमा, बुध, शनि हो तो ५ से गुणो, मंगल हो तो ८ से गुणो, बृहस्पति हो तो १० से, शुक्र हो तो ७ से गुणना, प्रथम तात्कालिक लग्न लिप्तापिण्डको अपने गुणकारसे गुणके पश्चात् लग्नगत ग्रहके गुणकारसे गुणके जो अंक हों सो रखना. आगे काम देवेगा ॥ १ ॥

## अथ नक्षत्रानयनम्।

**सप्ताहतं त्रिघनभाजितशेषमृक्षं दत्वाऽथवा नव विशोध्य नवाऽथवा स्यात् ॥ एवं कलत्रसहजात्मजशत्रुभेभ्यः पृष्टुर्वदेदुदयराशिवशेन तेषाम् ॥ २ ॥**

सं० टी०—अथ नक्षत्रानयनमाह। प्राक् योऽसौ राशिः पृथक् स्थापितस्ततः सप्तभिर्गुणयेत् ततस्तत्र नव देयाः शोध्या वा न किंचिद्वा कदोच्यते। यदा प्रश्नलग्ने प्रथमद्रेष्काणो भवति तदा नव देयाः अथ द्वितीयस्तदा न देया न शोध्याः अथ तृतीयस्तदा नव शोध्याः। एवं कृत्वा तस्य राशेः सप्तविंशत्या भागमाहरेत् ततो यावत्संख्याकोंऽवशेषो भवति तावत्संख्यमश्विन्यादितो यं नक्षत्रं भवति तन्नक्षत्रं तस्य वाच्यम्। अथ पुरुषः स्वपत्न्या नक्षत्रं पृच्छति तदा तात्कालिके लग्ने राशिषट्कं दत्वा तस्य लग्नस्य लिप्तापिंडीं कृत्वाऽगतं राशिं गुणकारेण गुणयेत्। लग्ने ग्रहश्चेत्तद्गुणकारेण गुणयेत्। ततस्तस्य स-

मगुणस्य प्राग्वन्नवांकविशोधनं कर्तव्यं । ततस्तस्य सप्तविंशत्या भाग-मपहृत्यावशेषांकसमं तत्पत्न्या नक्षत्रं वाच्यम् । अथ भ्रातुः पृच्छति तदा तत्काललग्ने राशिद्वयं दत्वा एतदेव कर्मकृतत्वात् भ्रातुः नक्षत्रं वाच्यम् । अथ पुत्रस्य पृच्छति तदा तत्काललग्ने राशिचतुष्टयं दत्वा तदेव कर्म कृत्वा तत्पुत्रनक्षत्रं वाच्यं । अथ शत्रोः पृच्छति तदा त-त्काललग्ने राशिपंचकं दत्वा तदेव कर्म कृत्वा तच्छत्रोर्नक्षत्रं वाच्यं । एतदुपलक्षणार्थं त्रिराशिसहितात्तात्कालिकाल्लग्नात् तन्मित्रस्यापि वाच्यं ।नक्षत्रानयनं उपलक्षणार्थमेवं सकलमपि नष्टजातकं वाच्यं ॥२॥

इति नक्षत्रान० ॥

भाषार्थः—अब प्रश्नकर्ताके जन्मनक्षत्रका विचार कहतेहैं—कि प्रथम श्लोकमें कहे प्रकारसे गुणकर जो पिंड स्थापन किया है उसको सातसे गुण देना; उपरांत प्रश्नलग्नका जो प्रथम द्रेष्काण होय तो उस सातसे गुणेहुयेमें ९ जोड़ देना, दूसरा द्रेष्काण हो तो न जोड़ना न घटाना वै-साही रखना, तीसरा द्रेष्काण होय तो ९ घटा देना, फिर सत्ताईस २७ से भाग देना. जो अंक शेष रहे वह नक्षत्र अश्विनीसे गणना करके जा-नना, इसीप्रकार जब कोई अपनी स्त्री, भाई, पुत्र, शत्रुआदिका नक्षत्र पूँछे तो उस भावको उदयलग्नप्रमाणकरके लग्नस्पष्टकी राशि बदलके अं-शादि वही रखने. जैसे स्त्रीका पूछे तो लग्नस्पष्टकी राशिमें ७ जोड़कर कहना, पुत्रका पूँछे तो ५ जोड़ना, भाईका पूछे तो ३ जोड़ना, माताका पूछे तो ४ जोड़ना, पिताका पूछे तो १० जोड़ना, शत्रुका पूछे तो ६ जोड़ना ऐसेही जानना ॥ २ ॥

वर्षर्तुमासाद्यानयनम् ।

वर्षर्तुमासतिथयो द्युनिशं ह्युडूनि वेलोदय-र्क्षनवभागविकल्पनाः स्युः ॥ भूयो दशादिगु-णिताः स्वविकल्पभक्ता वर्षादयो नवकदान-विशोधनाभ्याम् ॥ ३ ॥

सं०टी०—अथ वर्षाद्यानयनं । लग्नं तावत्तात्कालिकं लिप्तापिंडीकृतं राशिगुणकारहतं संभवात्तु ग्रहगुणकारहतमपि एकांते स्थापितं। तद्दशादिगुणं कारयेत् । एतदुक्तं स राशिस्थानचतुष्टये कार्यः । एकत्र दशगुणः कार्यः द्वितीये स्थानेऽष्टगुणः तृतीये सप्तगुणश्चतुर्थे पंचगुणः । ततस्तेषां प्राग्वत् नवकदानविशोधनं कृत्वा स्वविकल्पैर्भागमपहृत्यावशेषं वर्षादयो ज्ञेयाः ॥ ३ ॥

भाषार्थः—अब वर्ष, ऋतु, मास आदि निकालनेकी रीति कहतेहैं-कि जो पूर्वविधिसे लग्नका पिण्ड, राशि व ग्रह गुणकारसे गुणा करके जो अंक प्राप्त भया है उसको चार जगह स्थापन करे. प्रथम जगह १० से गुणे, दूसरे जगह ८ से गुणे, तीसरी जगह ७ से गुणे, चौथी जगह ५ से गुणा करे, फिर पूर्वोक्त कहे प्रमाण नव जोड़ना वा घटाना आदि करके वर्ष, ऋतु, मास, तिथि, दिन, रात्रि, नक्षत्र, समय, जन्मलग्न यह नव अपने भागके विकल्पनासे अर्थात् अपने २ भागके अंकोंसे भाग देकर क्रमहीसे वर्षादि जानना ॥ ३ ॥

**विज्ञेया दशकेष्वब्दा ऋतुमासास्तथैव च ॥**
**अष्टकेष्वपि मासार्द्धतिथयश्च तथा स्मृताः ॥४॥**

सं०टी०—तत्र न ज्ञातं कस्माद्राशेः कस्यानयनं तत्र ज्ञानार्थमाह। एते चत्वारो राशयः स्थापितास्तेषां मध्ये यो दशगुणो राशिः तत्र प्राग्वदेव नवकदानविशोधनं कर्तव्यं एवं कृत्वा दशगुणं कर्म योग्यं स्थापयेत् । एवं पृथक्कर्मभूमिं स्थाप्य तस्य विंशत्याधिकेन शतेन भागमपहृत्य योंऽकोऽवशिष्यते तदंकसमवर्षाणि जतानि इति वक्तव्यं। तस्यैव षड्भिर्भागमपहृत्य तत्र योंऽकोऽवशिष्यते तदंकसमे शिशिरादारभ्यतौ जात इति वक्तव्यं । तस्यैव कर्मयोग्यस्य राशेर्द्वाभ्यां भागमपहृत्य यदेकोऽवशिष्यते तदा ज्ञाततौ प्रथमे मासि जात इति वाच्यं । शून्यमवशिष्यते तदा तद्द्वितीये मासि जातः । एवं कृत्वा दशमहतः कर्मयोग्यो राशिरपास्यः । यस्य विंशत्यधिकवर्षशतादप्यधिकं जन्मतो व्यतीतं भवति तस्य नष्टजातकज्ञानोपायो नास्ति । योऽसा-

वष्टहतो राशिः तत्र प्राग्वदेव नवकदानविशोधनविधानं कृत्वा कर्मयोग्यराशिं स्थापयेत् । ततस्तस्य द्वाभ्यां भागमपहृत्य यद्येकोऽवशिष्यते तदा शुक्लपक्षे जात इति वक्तव्यम् । न किंचिदवशिष्यते तदा कृष्णपक्षे जात इति वक्तव्यं । तस्यैव कर्मयोग्यस्य राशेः पंचदशभिर्भागमपहृत्य योऽवशिष्यते तदंकसमसंख्यातिथौ जात इति वाच्यं । एवं कृत्वाष्टगुणकर्मयोग्यो राशिरपास्यः ॥ ४ ॥

भाषार्थः—अब पूर्वोक्त चार जगह स्थापित अंकोंमें किस जगह किसका भाग लेना सो तीन श्लोकोंकरके कहतेहैं—कि प्रथम नवसे घटा बढ़ा जो अंक दश १० से गुणित किया धरा है उसमें १२० परमाणुका भाग देके जो शेष रहे वह वर्षसंख्या, और उसी १० से गुणेमें ६ का भाग देके जो शेष रहे वह ऋतु जानना ऋतु शिशिरादिक्रमसे जानना, और २ से भाग देनेसे १ शेष रहे तो पहला महीना २ शेष रहें तो दूसरा महीना, अब जो दूसरे स्थानमें ८ से गुणी राशि स्थापित है उसमें २ से भाग लेनेसे १ बचे शुक्लपक्ष, दो २ अर्थात् ० शेष शून्यसे कृष्णपक्ष जानना, उसीमें तिथि १५ से भाग देके जो शेष रहे वह तिथि जाननी ॥ ४ ॥

## जन्मकालादिज्ञानम्।

### दिवारात्रिप्रसूतिं च नक्षत्रानयनं तथा ॥
### सप्तसङ्ख्येऽपि वर्गे तु नित्यमेवोपलक्षयेत् ॥५॥

सं० टी०—योऽसौ सप्तहतो राशिस्तत्रप्राग्वदेव नवकदानविशोधनं कृत्वा ततः कर्मयोग्यं राशिं स्थापयेत् । तस्य द्वाभ्यां भागमपहृत्य यद्येकोऽवशिष्यते तदा दिने जात इति वाच्यम् । अथ न किंचिदवशिष्यते तदा रात्रौ इति वक्तव्यं । तस्यैव कर्मयोग्यराशेः सप्तविंशत्या भागमपहृत्य योऽकोऽवशिष्यते तदंकसमसंख्यके नक्षत्रे अश्विन्यादित आरभ्य जात इति वाच्यं । अस्य कर्मणः पुनरपि विधानं नक्षत्रानयनस्य बाहुल्येनोपयोगित्वात् ॥ ५ ॥

भाषार्थः—अब जन्मकालादिज्ञान कहतेहैं कि जो तीसरे स्थानमें सातसे गुणित नव घटा बढ़ाके जो राशि स्थापित है उसमें २ का भाग देनसे १ शेष रहे तो दिनमें जन्म कहना, ० शून्य शेष रहे तो रात्रिका जन्म कहना, और २७ का भाग देनेसे जो अंक शेष रहे वह अश्वि-न्यादि नक्षत्र जनना, इसीप्रकार सातसे गुणी राशिमें नित्यही विचार करना. ॥ ५ ॥

**वेलामथ विलग्नं च होरामंशकमेव च ॥ प-**
**ञ्चकेषु विजानीयान्नष्टजातकसिद्धये ॥ ६ ॥**
**इति श्रीवराहमिहराचार्यकृते लघुजातके**
**नष्टजातकाध्यायोऽष्टादशः ॥ १८ ॥**

सं॰ टी॰—यस्मिन्दिने पुरुषजन्म जातं तस्य दिनस्य प्रमाणं घटिकादिकं कार्यं अथ रात्रौ जन्म जातं तदा रात्रिप्रमाणं ततो योऽसौ पंचगुणो राशिः स्थापितः तस्य प्राग्वदेव नवकदानविशोधनं कृत्वा ततो दिनप्रमाणेन रात्रिप्रमाणेन च भागमपहृत्य यदवशिष्यते तस्मिन् काले दिनगते रात्रिगते च तस्य जन्म वाच्यं। अथ विलग्न-मिति काले ज्ञाते राश्यादिलग्नं कार्यं। तत्र तस्य लग्नस्य होराद्रे-ष्काणनवांशद्वादशांशत्रिंशांशकभागाः कार्याः। ततस्तस्य तात्कालि-का ग्रहाश्च कर्तव्याः। ततो यथाभिहितेन विधिना दशान्तर्दशाष्टकव-र्गादेरभिहितस्य फलानां निर्देशः कार्यः। एवं नष्टजातकं साधयेत्॥६॥

इति श्रीभट्टोत्पलविरचितायां लघुजातकटीकायां हिताभिधानायां नष्टजातकाध्याय अष्टादशः ॥ १८ ॥

भाषार्थः—अब जो ५ से गुणी हुई राशि है—उसमें दिनका जन्म हो तो दिनमान घटीसे और रात्रिका जन्म हो तो रात्रिमानघटीसे भाग लेना जो शेष रहे वह जन्मकालघटी जानना. जब इष्टकाल सिद्ध होगया फिर जन्मलग्न, होरा, द्रेष्काण, नवांश, द्वादशांश, आदि साधन करना,

और तात्कालिक ग्रह साधकर दशांतर्दशा, अष्टकवर्ग, आदिका फल कहना इसप्रकार नष्टजातकसिद्धिके वास्ते जानना. ॥ ६ ॥

इति श्रीमद्वराहमिराचार्यकृतस्य लघुजातकस्य मिश्रशोभारामात्मज-
पण्डितनारायणप्रसादमुकुन्दरामकृतभाषाटीकायां नष्टजात-
काध्यायोऽष्टादशः ॥ १८ ॥

दृग्बाणनन्दचन्द्रेऽब्दे पौषे मास्यसिते दले ॥
तृतीयागुरुवारे च भाषाटीका समापिता ॥१॥

इन्द्रवज्रावृत्तम्।

बाणेषुगोभूमितविक्रमाब्दे शुक्ले नभस्ये शरजन्म-
तिथ्याम्॥टीकासमेतो रघुवंशनाम्ना संशोधितो-
ऽयं लघुजातकाख्यः ॥ १ ॥

समाप्तोऽयं ग्रन्थः ॥



# भावकुतूहलजातक—भाषाटीका.



## अहाहा ! अहाहा !! अहाहा !!!

अत्यंत आनंदका हेतु यह है कि आज भरतखंडकी प्राचीन ज्योतिषविद्याका उद्धार हुवा. क्योंकि जन्मपत्रोंका यथावत् फल कहनेमें यह एकही ग्रंथ है. यहांतक कि इस्के आधारसे जन्मसे ले मरणतकका हाल भली भाँति जानसक्के हैं. बस हो चुका. अकेला यही ग्रंथ कण्ठाग्र करनेसे पंडितजन सर्व जनसमूहका प्रारब्ध जान सक्के हैं. ज्यादा लिखनेसे क्या ? अनुभव करनेसे आपही मालूम होगा. महाशयो ! यदि जन्मपत्रका यथावत् फल कहनेकी इच्छा हो तो इसे जरूर लीजिये

की. १) ट.।)

ग्रंथ मिलनेका ठिकाना,

**हरिप्रसाद भगीरथजी,**

**कालकादेवीरोड़, रामवाड़ी, मुंबई.**

